N 5599

THE

PRINCESS OF WALES

# SARASWATI BHAWANA TEXTS

No. 60.

PART I.

---

THE

# SANDILYA SAMHITA

BHAKTI KHANDA

PART I.

---

GOVERNMENT SANSKRIT LIBRARY,

BENARES.

---

Price, Rs.1-8.] Saleable at half of the printed price.

The

PRINCESS OF WALES

# SARASWATI BHAVANA TEXTS

No. 60.

PART I.

---

*Edited by*

MAHAMAHOPADHYAYA

GOPINATH KAVIRAJ, M. A.

---

THE

# SANDILYA SAMHITA

## Bhakti Khanda

Part—I.

---



*Printed by Mr. H. P. Dutt,*

At THE EUREKA PRINTING WORKS,

Godhowlia, Benares.

---

1935.

श्रीः।

महर्षिश्रीशाण्डिल्यकृता

# शाण्डिल्यसंहिता

## ( भक्तिखण्डः )

---

काशिकराजकीयपाठशालीयपुराणेतिहासाध्यापकेन

व्याकरणाचार्यमीमांसातीर्थफडकेकुलजेनानन्तशास्त्रिणा संशोधिता।

---

THE

# SANDILYA SAMHITA

## BHAKTI KHANDA

OF

## MAHARSHI SANDILYA

EDITED WITH INTRODUCTION

BY

**Ananta Shastri Phadake Vyakaranacharya,**
**Professor, Sanskrit College, Benares.**

श्री १०८ भैरवाय नमः ।

# प्रास्ताविकं किञ्चित् ।

:o:

अथोपक्रम्यते श्रीमहर्षिशाण्डिल्यसम्पादितशाण्डिल्यसंहितायाः पञ्चमं भक्तिखडं प्रकाशयितुम् । इयं संहिता पाञ्चरात्रसंहितासु पाद्मादिष्वन्यतमा । अस्या नामनिर्दिशोऽग्निपुराणपाद्मसंहितादिग्रन्थेषूपलभ्यते । अस्याः शाण्डिल्यसंहिताया धर्म-अर्थ-काम-मोक्ष-भक्ति-संज्ञकानि पञ्च खण्डानि विद्यन्ते । परन्तु धर्मादीनि चत्वारि खण्डानि प्रायःसंप्रति नोपलभ्यन्ते । अस्मिन् भक्तिखण्डे साध्यसाधनरूपप्रकारद्वयवत्या भक्तेः सम्यग्वर्णनमुपलभ्यते । अत्र साधनभक्तेर्वर्णनप्रसङ्गे विशिष्टपूजाद्यनेकाचाराणां विवरणदर्शनेन स्फुटतया प्रतीयतेऽयं वैष्णवग्रन्थ इति । प्रसङ्गतश्च साधनभक्त्यङ्गदोषा अत्र निर्दिष्टाः प्रायो नान्यत्रानया रीत्योपलभ्यन्ते । पञ्चमस्य भक्तिखण्डस्यायं प्रथमो भागः । द्वितीयभागे ग्रन्थविषयकं तत्सम्बन्धानुसंबद्धमन्यच्च निवेदनं विषयसूच्यादिकं च प्रकाशयिष्यत इति निवेदयते—

गवर्नमेंट संस्कृत कालेज,
काशी ।
वैक्रमे १९९२ माघवद्यामावास्यायाम् ।

विद्वद्वशंवदः—
अनन्तशास्त्री फडके
व्याकरणाचार्यो मीमांसातीर्थश्च ।

श्री १०८ भैरवायनमः ।

# महर्षिश्रीशाण्डिल्यकृता

# शाण्डिल्यसंहिता ।

## तत्र पञ्चमे हरिभक्तिखण्डे—

## प्रथमोऽध्यायः ।

—*—

ऋषय ऊचुः—

भगवन् भवताऽस्मभ्यं पुरुषार्थचतुष्टयम् ।
धर्मार्थकाममोक्षाख्यैः खण्डैरुक्तं विभागशः ॥ १ ॥
धर्मोऽत्र त्रिविधः प्रोक्त आचारन्यायनिष्कृतैः ।
कालतो देशतः शक्त्या भेदस्तत्राप्यनेकधा ॥ २ ॥
ततोऽर्थेन यथार्थेन सिद्धेर्द्वितयमीरितम् ।
वैदिकी लौकिकी तत्र नीतिर्मन्त्रास्त्वनेकशः ॥ ३ ॥
लौकिकैर्वैदिकैश्चापि नामोपासनकर्मभिः ।
कामोऽपि कामं गदितो यत्रासक्तिः स्वतो नृणाम् ॥ ४ ॥
वैराग्यं साङ्ख्ययोगाद्यैर्ज्ञानकाण्डं समीरितम् ।
ब्रह्मात्मभावना येन जीवः स्वाराज्यमृच्छति ॥ ५ ॥
अथ केनाप्युपायेन देशकालानपेक्षया ।
सिद्धिः सर्वाधिका येन तन्नः शंसितुमर्हसि ॥ ६ ॥
सर्वज्ञोऽसि तपोमूर्तिर्वेदवेदान्ततत्परः ।
प्रियोऽसि देवदेवस्य ततः पृच्छामहे प्रभो ॥ ७ ॥

शाण्डिल्य उवाच—

सम्यग्व्यवसिता बुद्धिर्भवतामृषिसत्तमाः ।
जगतामुपकारार्थं विज्ञानामपि सर्वतः ॥ ८ ॥
क्षेममात्यन्तिकं विप्रा हरेर्भजनमेव हि ।
देशकालानपेक्षात्र साधनाभावमप्युत ॥ ९ ॥
हरिर्देहभृतामात्मा सिद्धः कण्ठमणेरिव ।
कः प्रयासो भवेत्तस्य प्रीणने करुणानिधेः ॥ १० ॥
धर्मार्थकाममोक्षार्थैरेष एवाभिसाध्यते ।
यथैव सरितः सर्वाः पर्यासन्नाः सरित्पतिम् ॥ ११ ॥
न जातिर्न तपः शीलं नालं साधनपद्धतिः ।
प्रीणनाय मुकुन्दस्य पूर्णकामस्य नित्यशः ॥ १२ ॥
अशक्यो हि कथं धर्मः श्रेयसे प्राणिनां भवेत् ।
ततो यतेत धर्मस्यादानायैव च सर्वतः ॥ १३ ॥
बहुकालेन भ्रमतां ब्रह्मादिस्तम्बयोनिषु ।
सर्वसम्पत्तिसम्बन्धसंभवेनाभवत्सुखम् ॥ १४ ॥
ततः पुनः कथं साध्यं पद्धयां संरोहणं दिवः ।
पराधीनात्मनां तस्माद्धरेश्वरणमाश्रय ॥ १५ ॥
इत्येवं सनकादीनां शासनास्ति महात्मनाम् ।
आचारोऽपि सतां मानं संदिग्धे वेदवद्भवेत् ॥ १६ ॥
क्रियमाणेऽपि यत्रास्ति परमानन्दसंभृतिः ।
को न सेवेत तं धर्मं मतिमान्भक्तिलक्षणम् ॥ १७ ॥
हित्वा चतुर्विधं मोक्षं प्रसादोपचितं हरेः ।
शुकादयो महात्मानस्तत एव भजन्ति तम् ॥ १८ ॥
भक्तिः श्रीकृष्णदेवस्य सर्वार्थानामनुत्तमा ।
एषा वै चेतसः शुद्धिर्यतः शान्तिर्यतोऽभयम् ॥ १९ ॥
वैराग्यं चापि विज्ञानं यस्या एव वशानुगे ।
अत्र प्रसन्नमनसां स्खलनं क्वापि न श्रुतम् ॥ २० ॥

सर्वात्मनाऽनिमित्तैव स्नेहधारानुकारिणी ।
वृत्तिः प्रेमपरिष्वक्ता भक्तिर्माहात्म्यबोधजा ॥ २१ ॥
प्रेमप्रमेयतः सिद्धा अनभिज्ञात्मनां कचित् ।
तथापि तत्स्वरूपेण स्वरूपाविष्कृतिर्मता ॥ २२ ॥
अनेकजन्मसुकृतैर्दैवाधीनैव दृश्यते ।
प्रपत्तिश्चरणाम्भोजे केषांचिन्मुरवैरिणः ॥ २३ ॥
वस्तुतस्तु परा भक्तिर्जायते तदनुग्रहात् ।
समानकृतिकर्तॄणां कल्प्यः कोऽपि नियामकः ॥ २४ ॥
स्वेच्छस्य कर्तुः कोऽप्यस्ति प्रेरकः किमनुग्रहे ।
इत्यादिसंशये प्राज्ञा लीलामेव समूचिरे ॥ २५ ॥
तदर्थमेव सकलमाप्तकामोऽप्यकामयत् ।
सैषा भगवतः शक्तिर्विरोधेऽप्यविरोधिनी ॥ २६ ॥
कूटस्थस्याप्यधिष्ठातुर्निर्गुणस्य परात्मनः ।
अनन्तस्य स्वतन्त्रस्य स्वरूपावस्थितिः प्रभोः ॥ २७ ॥
ज्ञानेच्छाकृतिभिस्तस्य स्वरूपानन्दजा कृतिः ।
द्विविधा रन्तुमनसः सर्वादौ प्रादुरास ह ॥ २८ ॥
वामांशसंभवा तत्र लीलासृष्टिरनुत्तमा ।
काचित्काभवा सृष्टिः सृष्टकार्यभवा परा ॥ २९ ॥
छायामायामयी चान्या त्रेधा भिन्नाप्यनेकधा ।
सृष्टीनामेव बाहुल्यात्कृतीनां च फले भिदा ॥ ३० ॥
तत्राद्या तु कृतार्थैव प्रकटानन्दविग्रहा ।
अन्तजा संगता नैव मध्या नियतलक्षणा ॥ ३१ ॥
तस्या विशेषतः प्रोक्तो विधिश्चापि फलोदयः ।
आद्यैवाभवदुक्तीनां विषयतां वदाम्यहम् (?)॥ ३२ ॥
उत्तमः पुरुषः पूर्णो भगवान् भक्तवत्सलः ।
आनन्दचिद्घनाकारः श्रीपतिः परमो हरिः ॥ ३३ ॥

ब्रह्मानन्दमये लोके लीलासृष्टौ विराजते।
तस्य वामांशसंभूताः प्रियाः स्युर्नित्यविग्रहाः ॥ ३४ ॥
रमन्ते नित्यदा लोके स्वेच्छक्रीडामहोत्सवैः।
आधिदैविकरूपैषा मायासम्बन्धवर्जिता ॥ ३५ ॥
अस्य वाध्यात्मरूपेण सृष्टिरन्यापि संमता।
तत्रात्मसंभवानां तु जीवानां क्रीडनक्रिया ॥ ३६ ॥
तेषु संभवकालेन येऽस्यानुग्रहमागताः।
प्रपन्नाः शरणं विष्णोः कृत्या ज्ञानेन वा स्वयम् ॥ ३७ ॥
तेषां विस्तारमायातं भक्तिमार्गमनेकधा।
अभियोगेन भवतां वर्णयिष्ये यथामति ॥ ३८ ॥
इति शाण्डिल्यसंहितायां पञ्चमे हरिभक्तिखण्डे प्रथमोऽध्यायः।

---*---

## द्वितीयोऽध्यायः।

शाण्डिल्य उवाच—

ततोऽक्षरात्समुत्पन्ना विष्णुब्रह्ममहेश्वराः।
स्वयंसिद्धाः कला तस्य पुरुषस्य महात्मनः ॥ १ ॥
तासां प्रकृतयस्तत्र महालक्ष्मीमुखाः श्रियः।
ससृजुः सकलं विश्वं सुरमानुषराक्षसम् ॥ २ ॥
प्रकृतिर्याऽक्षरब्रह्मविवर्तपरिणामिनी।
तयाऽसौ स्वात्मकं विश्वं निर्ममे निर्गुणोऽह्यजः ॥ ३ ॥
आकाशादिरभूत्तस्मात्षट्त्रिंशत्तत्वसंचयम्।
आधिदैविकमाध्यात्ममाधिभौतिकमप्युत ॥ ४ ॥
शब्दात्मिका परा मूर्तिरेका रूपात्मिकाऽस्य च।
नामरूपात्मकं जातं प्रपञ्चब्रह्मसंमितम् ॥ ५ ॥
नादात्तु प्रणवव्यक्तिस्ततो वेदत्रयी स्फुटा।
ततो देवत्रयी लोकत्रयी कालत्रयी तथा ॥ ६ ॥

काण्डत्रयं वेदतरोः कृष्णं शोणं सितं श्रुतम् ।
गृध्राश्चापि कपोताश्च हंसास्तेषु समाश्रिताः ॥ ७ ॥
भ्रान्तिः कृतिरवस्थानं तेषामाचरणं स्वतः ।
तादृशं तु फलं तेषां स्वस्वप्रकृतिसंभवम् ॥ ८ ॥
आदिसृष्टौ समुत्पन्ना विस्फुलिङ्गसमार्चिताः ।
तेषां संसर्गतश्चित्रा सुराणामपि धीरभूत् ॥ ९ ॥
गुणत्रयानुरूपेण वेदभागेन भासुराः ।
दानवा मानवा यस्माद्गीर्वाणा जातयः पृथक् ॥ १० ॥
तत्र सत्त्वं निर्मलत्वाद्वासुदेवप्रकाशकम् ।
वैराग्यं च यतो भक्तिर्यतो ज्ञानमनुत्तमम् ॥ ११ ॥
केचित्सत्त्वानुरूपेण कर्मणा जगदीश्वरम् ।
भावयन्तो दृढं भक्त्या तोषयन्ति निजं गुरुम् ॥ १२ ॥
मन्त्राश्च ब्राह्मणाश्चापि ऋत्विगाहुतिदेवताः ।
सर्वं तदात्मकं ज्ञात्वा कृतं यत्तद्धि वैष्णवम् ॥ १३ ॥
एवं हि क्रियमाणानां ब्राह्मणानां महात्मनाम् ।
भगवान्प्रीयते विष्णुः सर्वं विश्वं तदात्मकम् ॥ १४ ॥
अच्युतानन्त गोविन्द नारायण जनार्दन ।
विकलं कर्म सकलं स्यादेवं स्मरणाद्धरेः ॥ १५ ॥
अग्निहोत्रादि सोमान्तं हरेरवयवैर्यजन् ।
हरिमेवात्मभावेन गृहमेधी तरत्यसौ ॥ १६ ॥
यज्ञो हि भगवान्विष्णुर्यज्ञभुग्यज्ञकृद्धरिः ।
यज्ञेन यज्ञमयजन्देवाश्च ऋषयः पुरा ॥ १७ ॥
त्रेतामुखे संप्रवृत्ता त्रयी त्रेताग्निना सह ।
तया वै भगवान्यज्ञः श्रेयो लोकस्य निर्ममे ॥ १८ ॥
वर्णाश्रमविभागेन कर्मणां बहुधा गतिः ।
सर्वास्ता हरिसात्कृत्वा भवपारं सुरा ययुः ॥ १९ ॥

अहिंसयाप्यदम्भेन सर्वेषां हितकारिणा ।
स्ववर्णाश्रमधर्मेण शुद्धं चित्तं विशेद्धरौ ॥ २० ॥
अथवा निजशक्त्यापि महतामनुकम्पया ।
स्वल्पमप्याचरन्धर्मं भवेद्भगवतः प्रियः ॥ २१ ॥
संस्कारैः संस्कृतो देहो भवेत्क्षेत्रीकृतो नृणाम् ।
तत्र यत्क्रियते कर्म तत्फलाय प्ररोहति ॥ २२ ॥
पुण्येनाश्रमधर्मेण आन्तरं क्षीयते मलम् ।
श्रौतेन शुध्यते तद्धि स्मार्तैर्याति स दिव्यताम् ॥ २३ ॥
तीर्थस्नानैस्तथा दानैः पितृमेधैः सुरार्चनैः ।
सर्वेन्द्रियाणां संशुद्धिर्हर्यविशस्तदर्पितैः ॥ २४ ॥
आत्मा विज्ञानभक्तिभ्यां विरक्त्या संप्रकाशते ।
एवं जन्मशतैरस्य ब्रह्मभावेन संहृतिः ॥ २५ ॥
न वियन्ति पथं धूमं यदि तन्नार्पयन्ति ते ।
कर्मैव कर्मनाशाय यदि भक्त्याऽभिजायते ॥ २६ ॥
यथा हविरजीर्णोऽयं वायुना जरयत्यसौ ।
एवं शश्वदभद्रं तद्भवेद्भद्रं हरेर्मतम् ॥ २७ ॥
कर्मणा सिद्धिमापन्नाः पूर्वं स्वायम्भुवादयः ।
नियमो न सतो लोके सिद्धिर्नास्मिन्व्यवस्थिता ॥ २८ ॥
समर्थस्य स्वतन्त्रस्य का भवेद्धारणा हरेः ।
पापिनं मोचयेत्कापि किं पुनश्चोक्तकारिणम् ॥ २९ ॥
एवं वै कर्म केचित्कृतिनः समुपागताः ।
प्रणत्या संयुता चित्ते भक्तिर्भगवतो वरा ॥ ३० ॥
अनिमित्तेन धर्मेण स्वीयेन हरिमेधसा ।
भवेत्सालोक्यताऽवाप्तिर्येनासौ सुखमेधते ॥ ३१ ॥
येन केन प्रकारेण कृष्णस्य भजनं हितम् ।
तेन संमुच्यते जीवो यदानन्दमयो ह्यसौ ॥ ३२ ॥

एवं परम्परासिद्धिः केषांचिद्‌दृश्यते स्वतः ।
ते तु नानोपचारेण भक्तियोगेन संश्रिताः ॥ ३३ ॥
शुद्धात्मानो जितात्मान उपासन्ते यथाविधि ।
केचित्तु वैदिकैर्मन्त्रैरागमोक्तैस्तथोभयैः ॥ ३४ ॥
दीक्षाविधिं गुरोर्लब्ध्वा कृत्वा देहं तदात्मकम् ।
श्रद्धया प्रयतो नित्यं समर्चेद्भगवत्पदम् ॥ ३५ ॥
प्राणायामादिभिः शुद्धं धारणादग्धकिल्विषम् ।
समर्चन् यदसौ चेतः सुखमत्यन्तमश्नुते ॥ ३६ ॥
प्रातर्ध्यात्वा तथा स्नात्वा निवृत्तः स्वाह्निकादपि ।
भूतानि शोध्य प्राणांश्च संस्थाप्यासौ विशुध्यति ॥ ३७ ॥
न्यासैर्नानाविधैस्तस्य भवेत्सर्वात्मभावना ।
तयास्यार्चनसंसिद्धिर्भाववृद्धिः समर्चनात् ॥ ३८ ॥
नित्यैर्नैमित्तिकैरस्य व्यावृत्तस्याप्यहर्निशम् ।
भवेत्सारूप्यसंपत्तिर्निवृत्तिर्भवसागरात् ॥ ३९ ॥

इति श्रीशाण्डिल्यसंहितायां पञ्चमे हरिभक्तिखण्डे
द्वितीयोऽध्यायः ॥ २ ॥

---*---

## तृतीयोऽध्यायः ।

शाण्डिल्य उवाच—

अथार्चावसथं तस्य शृण्वन्तु मुनिसत्तमाः ।
दिव्यसूरीन् प्रपद्याशु पञ्चधा संस्कृतः स्वयम् ॥ १ ॥
पञ्चार्थवित्पुण्यमूर्तिर्वेदशास्त्रविदग्रणीः ।
अमानी मानदः शान्तो मैत्रः करुण आत्मवान् ॥ २ ॥
निस्पृहः सर्वकामेभ्यो विरक्तो निजधर्मकृत् ।
शुचिः प्रसन्नो गम्भीरो धीरो विष्णुजनप्रियः ॥ ३ ॥

एवं भूतो महाविष्णोरर्चनं भक्तितश्चरेत् ।
स्वयं व्यक्ते तथाऽव्यक्ते स्वरूपे पूजनं भवेत् ॥ ४ ॥
शिलामृद्दारुलोहाद्यैः कृत्वा प्रतिकृतिं विभोः ।
श्रौतस्मार्तागमैस्तस्य प्रतिष्ठापनमिष्यते ॥ ५ ॥
यत्र सन्निहितो देवः स्वयमेव सदा भवेत् ।
शालग्रामादिसंस्थानं स्वयं व्यक्तं हि तन्मतम् ॥ ६ ॥
चिरन्तनार्चा यत्रास्ति मुनिदेवाभिवन्दिता ।
अर्चावताररूपेण तत्र देवो जनार्दनः ॥ ७ ॥
तत्र पूजाप्रवाहोऽपि महतां समयानुगः ।
तत्तथैवानुसर्त्तव्यो दूषयंश्च पतत्यसौ ॥ ८ ॥
तीर्थे देवे तथा क्षेत्रे काले देशे च धामनि ।
या यथा वर्तते रीतिस्तां तथैवाभिमानयेत् ॥ ९ ॥
ये यत्र देवा भूदेवा यो धर्मः शास्त्रसंमतः ।
ते तथैवानुसर्तव्या इत्याह भगवानजः ॥ १० ॥
नाष्टाङ्गयोगयज्ञाद्यैर्मन्दानां दृक्फलं गतः ।
स एवार्चावतारेण याति प्रत्यक्षतां नृणाम् ॥ ११ ॥
चक्षुषो विषयं गत्वा अर्चारूपेण माधवः ।
सर्वेषां परमानन्दं धत्ते कल्पतरुर्यथा ॥ १२ ॥
पुण्यं भूमितले यस्मिन्वर्षे पुण्यतरे पुनः ।
व्यक्तः पुण्यतमे स्थाने भगवान्स्वयमेव हि ॥ १३ ॥
कलापे तु विशालायां सालङ्कायननीवृति (?) ।
इन्द्रद्युम्ने चोत्कलेषु कूर्मक्षेत्रे परत्र च ॥ १४ ॥
कावेर्यां द्राविडे पुण्ये पद्मनाभे च वैङ्कटे ।
कुशस्थल्यां द्वारकायां शङ्खोद्धारे प्रभासके ॥ १५ ॥
माथुरे गोकुले वृन्दावने गोवर्द्धने गिरौ ।
एवंविधेषु चान्येषु स्वयं व्यक्तो हरिः प्रभुः ॥ १६ ॥

नैवागमविसर्गौ स्तः स्वयं चक्रे स्थिरेऽपि च।
भोगमूर्तेर्भवन्त्यत्र उपचारा निमित्तजाः॥ १७॥
महाविभूतिभिः पूजा अवतारोत्सवा अपि।
तौर्यत्रिकं वेदघोषः पूजा सत्रे प्रवर्तते॥ १८॥
महाभिषेकोऽनुसवं महामन्त्राभिसंहृतिः।
सदैव सर्वभक्तीनां विनियोगोऽत्र जायते॥ १९॥

अर्चनं मन्त्रपठने यागो योगो मधुद्विषः।
नाम्नां संकीर्तनं सेवा तथा तच्चिह्नधारणम्॥ २०॥
तदीयाराधनं चर्या नवधा द्विजसत्तम।
जन्मना विद्ययात्रापि तपसा हरिसेवया॥ २१॥
सत्सङ्गेन नृणां शुद्धिः पञ्चधा परिकीर्तिता।
नवधा भक्तियोगेन तस्यैवोद्धरणं स्मृतम्॥ २२॥

वन्दनं सेवनं चास्य भक्तानामभिपूजनम्।
नामसंकीर्तनं चिह्नै रङ्कनं शूद्रजन्मनाम्॥ २३॥
देवालयनातिदूरात्तथा भक्तानुसंमतिः।
मानसेज्या नामकीर्तिर्भक्तिश्चावरजन्मनाम्॥ २४॥
प्रसादग्रहणं तेषां भक्तो विघ्नेन जायते (?)।
श्वजन्मनां परा भक्तिर्हृदि वास्य स्वयं भवेत्॥ २५॥
श्रुतिस्मृत्युदितं नित्यं स्वीयमाचारमाचरेत्।
यो न सेवेत शक्तस्तं पाखण्डो हि मतो हरेः॥ २६॥
नामसंकीर्तनाद्विष्णो नरको न कथञ्चन।
नीचयोनिषु तस्यैव जननाज्ञाविलङ्घनात् (?)॥ २७॥
शनैरुत्तमतां याति चोक्तकारी पुनर्भवेत्।
अयोनावपि दृश्यन्ते भक्ता देवादिवन्दिताः॥ २८॥
इत्येकेषां वचो विप्रा धारयेद्भगवत्प्रियः।
भक्त्यैव सकला सिद्धिर्भवत्यस्येति सांप्रतम्॥ २९॥

चेतसोऽनुगतिर्नित्या पादयोः करुणानिधेः ।
तथैव प्रीयते विष्णुर्न तथार्चोपचारकैः ॥ ३० ॥
भक्त्या निर्मलपानीयैस्तथा किसलयैः सुमैः ।
तुलसीमञ्जरिदलैः प्रीयते केशवो न किम् ॥ ३१ ॥
सुवर्णैर्मौक्तिकैः पुष्पैः पटैः क्षौमाम्बरैस्तथा ।
न गृह्णाति रमानाथो यदि प्रीत्या न चार्पितम् ॥ ३२ ॥
परमानन्दमात्रस्य पूर्णकामस्य श्रीपतेः ।
तार्क्ष्यासनस्य वैकुण्ठनाथस्य किमपेक्षितम् ॥ ३३ ॥
शङ्खचक्रादिसंकीर्णा श्यामलामलकोन्मिता ।
शालग्रामशिला पूज्या स्वयं व्यक्ता द्विजैर्गृहे ॥ ३४ ॥
गृहे मूर्तिः सदा पूज्या शालग्रामशिलायुता ।
चक्राङ्कसहिता सैव पूजनीया यथाविधि ॥ ३५ ॥
शालग्रामं न यद्गेहे तुलसी गौर्न विद्यते ।
न च भागवतं शास्त्रं तच्छ्मशानवदेव हि ॥ ३६ ॥
शालग्रामशिलायां तु नित्यं सन्निहितो हरिः ।
यावन्ति तीर्थजातानि तावन्त्यस्यावनेजने ॥ ३७ ॥
ब्राह्मणैः क्षत्रियैर्वैश्यैः शूद्रैस्तप्तायुधाङ्कितैः ।
दीक्षायुक्तैस्तथा दारैः पूजनीया सदा शिला ॥ ३८ ॥
शालग्रामशिलातीर्थं पेयं जीवैर्दिने दिने ।
अपूजयंश्च विप्रस्तु रौरवं याति दारुणम् ॥ ३९ ॥
मन्त्रोपचारविधिभिर्हीनमप्यस्य पूजनम् ।
मुक्तिं ददाति सारूप्यां दशपूर्वैर्दशापरैः ॥ ४० ॥
अदत्वा तुलसी तस्मा अग्रहीत्वाऽवनेजनम् ।
कदापि नैव भुञ्जीत वैष्णवैर्विधवाजनैः ॥ ४१ ॥
उदकं चन्दनं चक्रं शङ्खं च तुलसीदलम् ।
घण्टारुचा (?) शिलाताम्रं नवभिश्चरणामृतम् ॥ ४२ ॥

चुलकेन पिबेत्तीर्थं शेषं शीर्ष्णि समावहेत्।
पूजापराधदोषाणां पापानां शमनं भवेत्॥ ४३॥
तीर्थपानाच्छतगुणं दोषस्तीर्थच्युतौ भवेत्।
तस्मात्पात्रेण तत्पेयं किं बाधः करधारया॥ ४४॥
शालग्रामाः समाः पूज्या विषमा न कदाचन।
विषमेष्वेकमेवार्च्यं समेषु द्वितयं न हि॥ ४५॥
शुचिः श्लक्ष्णामला सूक्ष्मा स्वर्णरेखाङ्किता शुभा।
यथा यथा शिला सूक्ष्मा महत्पुण्यं तथा तथा॥ ४६॥
या कापि मूर्तिः सम्पूज्या गण्डकीसम्भवा शिला।
गोमतीचक्रसहिता शङ्खेन गरुडेन च॥ ४७॥
गोमतीचक्रसंयुक्ता यत्र स्याद्गण्डकी शिला।
वाराणसीसमं क्षेत्रं जीवानां मुक्तये मतम्॥ ४८॥
शालग्रामं वहेच्छिष्णी प्रवासे द्विजसत्तम।
भूमियात्राफलं तस्य भवत्येव पदे पदे॥ ४९॥
आसन्ने मरणे प्राप्ते शालिग्रामं प्रपूज्य च।
हृदि कृत्वा पिबेत्तीर्थं स याति भवनं हरेः॥ ५०॥
आसन्ने मरणे यस्य मुखे नामावली हरेः।
महापातकमुक्तोऽसौ वैकुण्ठं चाधिरोहति॥ ५१॥
रात्रिशेषे समुत्थाय शुचिर्नारायणं गुरुम्।
स्मरेच्छ्रियं च गरुडं सर्वां लीलां विभूतिभिः॥ ५२॥
शौचं कृत्वा बहिर्ग्रामाद्दन्तधावनमाचरेत्।
मलस्नानं बहिः कृत्वा तीर्थस्नानं ततश्चरेत्॥ ५३॥
तुलसीमूलमृल्लिप्त्वा गङ्गाद्यावाह्य मन्त्रतः।
स्नात्वाऽघमर्षणं कार्यं माचम्यात्मनि मार्जनम्॥ ५४॥
पौरुषं सूक्तमावर्त्य जपेन्नारायणं मनुम्।
आचम्य तर्पणं कृत्वा शुद्धे दद्यात्सितांशुके॥ ५५॥

गोपीचन्दमृत्स्नाभिर्द्वादशाङ्गेषु नामतः ।
ऊर्द्ध्वपुण्ड्राणि कुर्वीत श्रिया युक्तानि वैष्णवः ॥ ५६ ॥
स्वशाखोक्ता ततः सन्ध्यां देवर्षिपितृतर्पणम् ।
विधाय गृहमागच्छेत् पादौ प्रक्षाल्य शुद्ध्यति ॥ ५७ ॥
कृतन्यासो शुचिः शान्तो धृतमुद्रो स्रजा युतः ।
रम्यपुष्पादिरचिते पीठे लक्ष्मीपतिं यजेत् ॥ ५८ ॥
भूलीलाविमलाद्याभिः शक्तिभिर्मधुसूदनम् ।
अनन्तविहगेन्द्राद्यैर्नित्यदासे विभूतिभिः ॥ ५६ ॥
वासुदेवादिमूर्तिनां केशवाद्यैश्च नामभिः।
आयुधैःशङ्खचक्राद्यैःकुमुदाद्यैश्च पार्षदैः ॥ ६० ॥
इन्द्राद्यैर्लोकपालैश्च सर्वानेव यथाक्रमम् ।
सुगन्धिपुष्पधूपाद्यैरुपचारैः समर्चयेत् ॥ ६१ ॥
यथोपदेशं कुर्वीत पूजनं मुरवैरिणः ।
श्रौतस्मार्तविधानेन आगमोक्तेन वा द्विजः ॥ ६२ ॥
श्रौतं वैखानसाद्युक्तं स्मार्तं प्रोक्तं वशिष्ठकैः ।
रहस्यं पञ्चरात्रोक्तमागमं मुनयो जगुः ॥ ६३ ॥
मन्त्रैः पुरुषसूक्तोत्थैस्तथा नारायणोदितैः ।
गुरुलब्धैर्भजेद् देवं यथालब्धोपचारकैः ॥ ६४ ॥
स्तुत्वा प्रणम्य नागेशपर्यङ्के शाययेद्धरिम् ।
मङ्गलार्घ्यं समर्प्यैव होमं कुर्याद्यथाविधि ॥ ६५ ॥
प्रणवैः पुरुषसूक्तैश्च श्रीसूक्तैर्मूलमन्त्रकैः ।
ध्यात्वा जाम्बूनदाभासं यज्ञनारायणं यजेत् ॥ ६६ ॥
नैवेद्यशेषद्रव्येण समव्योपृतरेशतैः (?) ।
प्रसादाहुतयो विद्यात्पाञ्चरात्रविधानतः ॥ ६७ ॥
एकैकाहुतिभिस्तत्र सर्वा लीलाविभूतयः ।
समर्चनीया विप्रेण यथाविभवविस्तरम् ॥ ६८ ॥

क्रियालोपो न कर्तव्यो न चाश्रद्धा न चालसम् ।
नावैष्णवानां सम्पर्को वित्तशाठ्यं न मौढ्यता ॥ ६९ ॥
एतद्वैकुण्ठसद्यज्ञं महाभागवतैः कृतम् ।
अनेन भवनं विष्णोर्याति विप्रो न संशयः ॥ ७० ॥
बलिदानं च नैवेद्यं ततो मध्याचमं भवेत् ।
भूतशुद्धिं हृदा ध्यायेत्ततो मूलजपं चरेत् ॥ ७१ ॥
स्वाध्यायाह्निकमप्यर्चा यथाशक्तिर्यथोदिता ।
वैष्णवो विष्णुतुष्ट्यर्थं नित्यकर्म समाचरेत् ॥ ७२ ॥
एवमर्चां समाप्याथ तदीयार्चनमाचरेत् ।
दीक्षाक्रमेण वर्णाद्वा शीलेन वयसापि वा ॥ ७३ ॥
नत्वा पादौ च प्रक्षाल्य शुभे पीठे निवेश्य च ।
गन्धैर्माल्यैः प्रसादैश्च ताम्बूलाद्यैः समर्चनम् ॥ ७४ ॥
सन्तोष्य नत्वा चोत्थाय कृताञ्जलिपुटः स्तुवन् ।
भक्तेषु भगवान्यस्मात्स्थितोऽनुग्रहमूर्तिभाक् ॥ ७५ ॥
अनन्तकोटिब्रह्माण्डयादोगण्डचयवारिधिः ।
कारुण्यामृतसम्पूर्णो येषु तेभ्यो नमो नमः ॥ ७६ ॥
समस्तवेदवेदान्तसर्वागममहोदधिः ।
भक्तीन्दोः संश्रितेभ्यो वो नित्यमेव नमो नमः ॥ ७७ ॥
सर्वत्र व्यापको विष्णुर्यो न गम्यो महेश्वरैः ।
स यत्र व्यक्तिमापन्नस्तेभ्यो नित्यं नमो नमः ॥ ७८ ॥
सर्वत्र समभावेन वर्त्तमानोऽपि माधवः ।
यः सुप्रसादरूपेण आस्ते तेभ्यो नमो नमः ॥ ७९ ॥
संसारग्राहगीर्णानां ये संजीवनभेषजाः ।
तेभ्यो महद्भ्यो भक्तेभ्यो नित्यमेव नमो नमः ॥ ८० ॥
प्रवर्तते यतो भक्तिशास्त्रं तेभ्यो नमो नमः ।
सर्वशास्त्रैकसारं यद्ब्रह्मविष्णुशिवोदितम् ॥ ८१ ॥
एवमादिस्तवैः स्तुत्वा कृत्वा चैव प्रदक्षिणाम् ।

विसृज्य स्वगृहे भक्तो यात्यसौ कृतकृत्यताम् ॥ ८२ ॥

इति श्रीशाण्डिल्यसंहितायां पञ्चमे भक्तिखण्डे—

अर्चावसथनिरूपणं नाम तृतीयोऽध्यायः ॥ ३ ॥

—*—

## चतुर्थोऽध्यायः ।

ऋषय ऊचुः—

ब्रह्मविष्णुशिवेभ्यो यद्भक्तिशास्त्रं महामुने ।
प्रोक्तं तत्सम्प्रदायान्नः कृपया वक्तुमर्हसि ॥ १ ॥

शाण्डिय उवाच—

शृणुध्वं मुनयः सर्वे रहस्यमिदमुत्तमम् ।
भक्तिशास्त्रं सुगम्भीरं यथाचार्यैर्निरूपितम् ॥ २ ॥
आसीत्तमोमयं विश्वमप्रज्ञातमलक्षणम् ।
तत्रापि स्वप्रकाशैकश्चिदानन्दमयो हरिः ॥ ३ ॥
स्वात्मक्रीडः स्वात्मरतिः स्वतन्त्रः स्वप्रकाशनः ।
स्वयंव्यक्तः स्वानुभूतः स्वाराज्ये सम्प्रतिष्ठितः ॥ ४ ॥
स एव लीलया लीलासृष्टिं चक्रे निजात्मना ।
निजानन्दमयीं नित्यामप्राकृतगुणात्मिकाम् ॥ ५ ॥
प्रादुर्भावे कृते तस्याश्चिक्रीडयिषयात्मनः ।
निजानन्दात्ममूर्तिनां पूर्णानन्दोऽप्यरीरमत् ॥ ६ ॥
एवं स रममाणः स्ववैचित्र्यमभिलक्ष्यतः ।
स्वभूर्नारायणो देवः प्रादुरासीत्स्वयंप्रभुः ॥ ७ ॥
स्वाभाविक्यास्य शक्त्याथ जाता ज्ञानबलक्रियाः ।
त्रिगुणा त्रिविधा देवी माया नाम महेश्वरी ॥ ८ ॥
समृद्धपावकाद्यस्माद्विस्फुलिङ्गा इवात्मनः ।
सर्व एव समुद्भूता नित्यात्मानोऽथ निःष्क्रियाः ॥ ९ ॥

चिदानन्दांशयुक्तानां तत्वानां नवविंशतिः ।
असूत भगवान्विष्णुर्माया तैरकरोदिदम् ॥ १० ॥
मनसा वचसाप्यास स्वतोयुः कतिधा जगत् (?) ।
मायया निजशक्त्या च यथायथमिदं बभौ ॥ ११ ॥
कालकर्मस्तु भावेन वैचित्र्यं जगतामभूत् ।
तेऽपि तस्मात्समासत्वै प्रकृत्यैव परात्मनः ॥ १२ ॥
ततो नारायणो देवो भगवानीश्वरः स्वयम् ।
क्षीरसिन्धुं च शेषं च कृत्वा निद्रां रतिं ययौ ॥ १३ ॥
निद्रया मायया तस्याः कालकर्मानुरूपया ।
पूर्वक्लृप्तं जगत्सूष्यन्नाभ्याः पद्ममभूद्विभोः ॥ १४ ॥
रजोगुणमुपादाय उद्यतः सर्गकर्मणि ।
स्वयंभूः पद्मभूरासीन्मुह्यमानः स्वकर्मणि ॥ १५ ॥
चतुर्मुखान्यसौ लेभे तपसा तोषयन्विभुम् ।
ददर्श चात्मनात्मानमात्मन्येव समाहितः ॥ १६ ॥
स स्तुत्वा सम्प्रसाद्यैनं वेदगर्भो विसृष्टये ।
प्रार्थयामास साहाय्यं निजात्मानुभवं तदा ॥ १७ ॥
रजसो ह्यपनोदार्थं शेषशायिनमीश्वरम् ॥ १७ ॥
वामदक्षिणभागाभ्यां तदा देवस्य शार्ङ्गिणः ।
वामदेवमहादेवौ प्रादुरास्तां स्वयंप्रभू ॥ १८ ॥
तौ कृताञ्जलयस्तेन सार्धमाज्ञां व्यजिज्ञपन् ।
तानाह देवदेवेशो वासुदेवोऽनुकम्पितः ॥ १९ ॥
सङ्कर्षणस्वात्ममूर्तिं वामदेवं सदा भज ।
संहारं कुरु दुष्टानां कालरूपेण नित्यशः ॥ २० ॥
अनिरुद्धगतिर्विष्णोः पालयैनं महाबल ।
मोचयात्र जगज्जातं सङ्कटेभ्यः समाश्रितान् ॥ २१ ॥
विरिञ्चे कुरु सृष्टिं मे पूर्वसृष्टाभिकल्पिताम् ।

मदीयज्ञानसम्पत्त्या नत्वा मोहयितारजः (?) ॥ २२ ॥
हंसरूपधरोऽहं त्वां भक्तियोगमनुत्तमम् ।
विस्तरेण पुनर्वक्ष्ये ततः संक्षेपतः शृणु ॥ २३ ॥
अहमेको विभुः साक्षात्प्रभुर्नान्यः परो मम ।
मयैव सकलं व्याप्तं भूतभव्यं भवच्च यत् ॥ २४ ॥
सच्चिदानन्दमात्रोऽहमीश्वरो मुक्तिदोऽमृतः ।
मदंशभूता मामेव भजन्ति पदलिप्सवः ॥ २५ ॥
योगेन तपसाचारैः यथा जानन्ति मामिह ।
ज्ञात्वा भक्त्या भजन्तो मां प्रविशन्ति मुनीश्वराः ॥ २६ ॥
भक्त्या मदात्मका भूत्वा शङ्खचक्रादिलक्षिताः ।
अनन्या मत्परा शान्ता मुक्ता मत्पार्श्वसंस्थिताः ॥ २७ ॥
एवंभूता मदीयास्ते पूजयन्ति यथाविधि ।
नानावताररूपं मां भक्त्या बहुविभेदतः ॥ २८ ॥
तारकं मे महामन्त्रं जप त्वं येन वाञ्छिता ।
भक्तिः सृष्टिश्च भो ब्रह्मन्समृद्धा सम्भविष्यति ॥ २९ ॥
एवमुक्तस्ततो देवस्तथा चक्रे सिसृक्षया ।
सृष्टिस्तस्य ततः पूर्णा यथेष्टा प्रादुरास ह ॥ ३० ॥
सुराश्चोत्तरकायेन असुरास्तस्य चेतरात् ।
वामदक्षिणभागेन नरनारीमयाश्च ते ॥ ३१ ॥
तौ कादाचित्सहायातौ प्रष्टुं देवं पितामहम् ।
योग्यतामवलोक्यैषा यथायोग्यमबोधयत् ॥ ३२ ॥
आदर्शदर्शनेनैव ते तथार्थं प्रपेदिरे ।
आत्मभासात्मवादेन बहुधा निजयुक्तितः ॥ ३३ ॥
उपासितो वसिष्ठेन कदाचित्प्रपितामहः ।
प्रायः प्राह महायोगं भक्तियोगं यथायथम् ॥ ३४ ॥
वसिष्ठोऽपि कृपाविष्टः शक्तये भक्तितो जगौ ।

पराशराय तन्मन्त्रं कुरुक्षेत्रे जगौ स च ॥ ३५ ॥
पराशरो जजापैनं भक्त्याऽऽचारेण सादरम् ।
जातोऽसौ परमाचार्यो मुकुन्दे भक्तिमान्मुनिः ॥ ३६ ॥
मुकुन्दभजनात्तस्य पुत्रो व्यासो महामुनिः ।
यतो धर्मो यतो ज्ञानं यतो भक्तिः प्रवर्तते ॥ ३७ ॥
पाराशर्यात्प्रवृत्ताभूद्भक्तेः सरणिरुत्तमा ।
ज्ञानवैराग्यसम्पूर्णा वेदवेदान्तसम्मिता ॥ ३८ ॥
जग्राह तां समाराध्य मधुनामा प्रभञ्जनः ।
मधुविद्येति सा प्रोक्ता दधिचिर्यामुवाच ह ॥ ३९ ॥
सा विद्या परमा लोके बहुधास्ति प्रभञ्जनात् ।
यस्यां मन्त्रविभागोऽपि देशिकानां पृथक् पृथक् ॥ ४० ॥
कर्णाटके द्राविडे च आन्ध्रे सौराष्ट्र उत्कले ।
शूरसेने माथुरेऽपि प्राधान्याद्व्यापृता तु सा ॥ ४१ ॥
व्यासराज्ये चोडपे च विमले कमलावने ।
हरिस्थाने महानागे कुलाद्रौ वरसिन्धुके ॥ ४२ ॥
सर्वत्रैव तु सा भक्तिर्जगत्प्राणायते सताम् ।
यत्र मृण्मुद्रया (?) विष्णुरेक एवेश्वरः प्रभुः ॥ ४३ ॥
ब्रह्माद्या भगवद्भक्ता जीवा दासा निसर्गतः ।
उपकुर्वन्ति मुक्त्यर्थमाश्रयान्मुरवैरिणः ॥ ४४ ॥
ब्रह्मणो मानसा पुत्राः पूर्वजाः सनकादयः ।
प्रतिसर्गास्तपोनिष्ठाः श्रमणा ऊर्ध्वरेतसः ॥ ४५ ॥
ते कदाचित्स्वपितरं सन्दिहाना अयूयुजन् ।
पितामहः स पितरं सस्मारास्योपलब्धये ॥ ४६ ॥
हंसरूपधरो विष्णुस्तदा दृग्गोचरोऽभवत् ।
त एनं प्रणिपत्याथोऽवतस्थुर्बद्धपाणयः ॥ ४७ ॥
तमर्थं द्रुहिणो देवं पप्रच्छ परमादरात् ।
यथायथमुवाचैनं भक्तियोगं सुदुर्लभम् ॥ ४८ ॥

सनकाद्या महात्मानो ब्रह्मणाप्यथ शिक्षिताः ।
याथातथ्येन ते लोके नारदादिभ्य ऊचिरे ॥ ४९ ॥
स एवानुग्रहाद्विष्णोर्विचरन् भुवनत्रयम् ।
आदित्येभ्यः समाचख्यौ हरयेऽपि प्रतोषितः ॥ ५० ॥
वदिष्यति महाभागान् विरक्तानूर्ध्वरेतसः ।
तेऽपि तां बहुधा व्यस्य स्थापयिष्यन्ति माथुरे ॥ ५१ ॥
गोविन्दचरणाम्भोजदासात्मानो मम प्रियाः ।
विरक्ताः कामभोगेभ्यो भवितारो जितेन्द्रियाः ॥ ५२ ॥
अथ विष्णोर्महाभागाः सम्प्रदायं निबोधत ।
पवित्रं मङ्गलं वेदैः पञ्चरात्रैश्च सम्मितम् ॥ ५३ ॥
श्वेतद्वीपे पुरा विष्णुं क्षीरसागरशायिनम् ।
ब्रह्माद्या देवताः सर्वे मुनयश्च तपोधनाः ॥ ५४ ॥
समाराध्य महात्मानो भक्त्या परमया विभुम् ॥ ५५ ॥
ऋचां च यजुषां चापि साम्नामाङ्गिरसामपि ।
साङ्ख्यानामपि योगानां सर्वोपनिषदां गिराम् ॥ ५६ ॥
सर्वेषामपि शास्त्राणां सारभूतं हरेः प्रियम् ।
रहस्यं पञ्चरात्राख्यं काले कालेऽभिलेभिरे ॥ ५७ ॥
स च कालस्य दैर्घ्येण दुरदृष्टवशान्नृणाम् ।
जगामोपरिचारेण महाभागवतेन भोः ॥ ५८ ॥
अधुना तु महाभागो नारदो देवसम्मतः ।
आराध्य तं महाविष्णुं लेभे शास्त्रं पुनश्च तत् ॥ ५९ ॥
तन्नारदेन मुनिना क्वचिदेव प्रकाशितम् ।
भीष्मोऽपि तं समाराध्य लेभे एवं परेऽपि च ॥ ६० ॥
तदुपासनया पूर्वं कर्दमात् कपिलो मुनिः ।
देवहुत्यनुसूयाद्या जग्मुर्नारायणान्तिकम् ॥ ६१ ॥
हरेः समादरस्तेषु वीक्ष्यैव कमलाऽधिपम् ।

कदाचिद्रमणं देवं पप्रच्छावनता सती ॥ ६२ ॥
पूर्णकाम हरे नाथ समभावेन वर्ततः ।
यदेष्वेवाधिका प्रीतिः वद कान्त रहो न चेत् ॥ ६३ ॥
प्राहैनां प्रेयसीं प्रेष्ठः प्रणयेनाभिपृच्छतीम् ।
रह एव परं ह्येतत्कथयेऽथापि ते प्रिये ॥ ६४ ॥
शुद्धोऽहं मुक्तदोषोऽहं निर्विकारोऽहमीश्वरः ।
तथापि भजमानानां वशीभूतः सुरद्रुमः ॥ ६५ ॥
समोऽपि मिहरो लोके यथैवाश्रयरूपतः ।
प्रकाशतेऽम्बुदर्शाश्मकुड्यादिषु स्वरूपतः ॥ ६६ ॥
यथा चिन्तामणिर्नृणां चिन्तितार्थं प्रयच्छति ।
न रागस्तस्य वैषम्यं स्वानुरूपफलप्रदः ॥ ६७ ॥
वासनाप्रेरणादेषामीश्वरो नैव दूष्यति ।
वैचित्र्यस्य विधानाय कर्मणा मय्यनादिता ॥ ६८ ॥
निर्गुणस्य गुणेशस्य एकस्यानेकरूपिणः ।
निष्क्रियस्य जगत्कर्तुः शक्तिरेवाविरोधिनी ॥ ६९ ॥
सदैकरसपूर्णस्य आनन्दाकारधर्मिणः ।
स्वतन्त्रस्य महेशस्य लीला राजकुमारवत् ॥ ७० ॥
अनादिरेव लोकानां रचना घटनेतरा ।
एकदैवेह संक्षणा(प्ता) अलुप्तज्ञानशालिना ॥ ७१ ॥
पञ्चरात्ररहस्याख्यं यन्मे योगं सुदुर्लभम् ।
प्राप्यैते नारदाद् देवि मामिष्ट्वा मामुपागताः ॥ ७२ ॥
मत्परा नान्यशरणा जपन्तो मे महामनुम् ।
समायाता पदं मेऽद्य उपकृत्य परानपि ॥ ७३ ॥
ज्ञानविज्ञानसम्पन्ना वेदवेदान्ततत्पराः ।
जितेन्द्रिया जितात्मानः साङ्ख्ययोगेन सङ्गताः ॥ ७४ ॥
साङ्ख्यं योगस्तथा शैवं वेदारण्ये च पञ्चकम् ।

प्रोच्यन्ते रात्रयः कान्ते आत्मानन्दसमर्पणात् ॥ ७५ ॥
पञ्चानामीप्सितो योऽर्थः स यत्र स्वयमाप्यते ।
परमानन्दमेतेन प्राप्नोति परमात्मनः ॥ ७६ ॥
प्रमाणपञ्चकैः पूर्णं पञ्चकार्थोपदेशनम् ।
प्रपञ्चातीतसद्धर्मं पञ्चरात्रमुदाहृतम् ॥ ७७ ॥
साङ्ख्यं योगश्च वैराग्यं तपो भक्तिश्च केशवे ।
पञ्चार्थदानतस्त्राणात् विद्या सा पाञ्चरात्रिकी ॥ ७८ ॥
पञ्चरात्रं बहुविधं बहुधा भाषितं परैः ।
प्रमाणानां विरोधेन तद्यथार्थं न चेदृशम् ॥ ७९ ॥
एतत्सर्वप्रमाणानां रहस्यं वेदसम्मितम् ।
मयैव कथितं दिव्यं नारदाय महात्मने ॥ ८० ॥
एतन्मे परमं दिव्यं पवित्रं मङ्गलं शुभम् ।
गृहाण साभिलाषा त्वं मन्त्रराजं समाहिता ॥ ८१ ॥
विश्वाक्षरं महामन्त्रं प्रपन्ना सा यथाविधि ।
जग्राह कमला देवी जजाप विरजातटे ॥ ८२ ॥
जप्यमाने महामन्त्रे सापि चैकान्तवल्लभा ।
निवासं वक्षसि प्राप्ता सम्प्रदायं ततो जगौ ॥ ८३ ॥
विश्वक्सेनाय प्रथममादिदेश प्रसादिता ।
स चान्येभ्यो जगौ देव अगस्त्याय महात्मने ॥ ८४ ॥
इन्द्रप्रमितये सोऽपि जैगीशव्याय योगिने ।
पराभूतिमहाभूतियोगिभ्यां क्रमशो जगौ ॥ ८५ ॥
नन्दाय विमलायैव प्रह्लादाय विवस्वते ।
पुण्डरीकाय सा देवी स्वयमेव ददौ रमा ॥ ८६ ॥
द्राविडे पाण्ड्यविषये कावेर्यां सह्यसानुनि ।
आहोबले व्यङ्कटे च श्रीरङ्गे मलयाचले ॥ ८७ ॥
काञ्च्यां कूर्माचले चापि पद्मनाभे त्रिविक्रमे ।

एवमादिमहास्थानेऽप्याविर्भूतैर्महात्मभिः ॥ ८८ ॥
प्रस्तार्यते रमाभक्तिर्बहुधा स्वानुरूपतः ।
शेषशेषिविभागेन यत्रात्मा प्रगटीकृतः ॥ ८९ ॥
ज्ञानकर्मसहायेन सा तु नारायणात्मिका ।
प्रयतिःसर्वदा शुद्धा वीरैर्धीरैरुपासिता ॥ ९० ॥
नवधार्चाप्रकारेण नित्यैषा कृतलक्षणा ।
यज्ञदानतपोनिष्ठैर्मुनिभिः सेव्यते सदा ॥ ९१ ॥
शमो दमस्तपः शौचं वैराग्यं यत्र तिष्ठति ।
सुहृदः सरलाः शुद्धा महाभागवतास्तु ते ॥ ९२ ॥
जानन्ति ते महाविष्णुं किञ्चिन्नान्यं मनागपि ।
सर्वदा हृदयाम्भोजे ध्यायन्ति परमादृताः ॥ ९३ ॥
सात्विकाः सत्त्वसम्पन्ना वैकुण्ठपुरवासिनः ।
भवन्ति भगवद्भक्ताः शान्ता दान्ता जितेन्द्रियाः ॥ ९४ ॥
इत्येवं संस्थितिस्तेषामेवमाह महेश्वरः ।
भक्तिज्ञानविरागाभ्यां सप्तधा नवधा तथा ॥ ९५ ॥
यः सत्यधर्मविख्यातो यत्र राजविभूतिभिः ।
सेव्यते श्रीपतिः प्रेम्णा सततं केवलात्मभिः ॥ ९६ ॥
शङ्कराद् देवरातोऽपि मुनिराप पराशरिः ।
ब्रह्मा शुकश्च सनका जानते यां यथायथम् ॥ ९७ ॥
यथाकालञ्च सम्प्राप्ताः स्वस्वभावानुरूपतः ।
कृतादौ सम्प्रवृत्ताऽभूद्भक्तिर्दिव्या परात्मनः ॥ ९८ ॥
कृते नारायणी भक्तिर्ब्राह्मी त्रेतायुगे बभौ ।
द्वापरे शाङ्करी भक्तिर्मुनिभिः समुपासिता ॥ ९९ ॥
स्ववर्णाश्रमधर्मेण कर्तव्येति धिया कृता ।
सात्विकाचारनिरतैः सात्विका सा कृते युगे ॥ १०० ॥
किञ्चिन्निमित्तमुद्दिश्य विभिन्नधृतशालिनी ।

यज्ञदानादिधर्मेण त्रेताख्ये राजसी कृता ॥ १०१ ॥
शास्त्रमज्ञाय मूढात्मजनैर्लोकानुकारिभिः ।
तामसी द्वापरे भक्तिः कृता साऽऽग्रहवादतः ॥ १०२ ॥
दक्षिणे सात्विकी भक्तिर्मध्यदेशे तु राजसी ।
तामसी क्वचिदन्यत्रागुणा सन्दृश्यते द्विजाः ॥ १०३ ॥

इति श्रीशाण्डिल्यसंहितायां पञ्चमे भक्तिखण्डे सम्प्रदायत्रयनिरूपणं नाम चतुर्थोऽध्यायः ॥ ४ ॥

——:o:——

## अथ पञ्चमोऽध्यायः

ऋषय ऊचुः—

भगवन्भवता प्रोक्तं सम्प्रदायत्रयं पुरा ।
विष्णुब्रह्ममहेशेभ्यो बहुधाचार्यभेदतः ॥ १ ॥
गुणत्रयविभागश्च युगत्रयविभागतः ।
तेषां च लक्षणं प्रोक्तं पारम्पर्यक्रमोऽपि च ॥ २ ॥
तेषां देशस्थितिः प्रोक्ता कालस्थितिरुदाहृता ।
अधुना तु महाभाग तार्तीयं वक्तुमर्हसि ॥ ३ ॥
निर्गुणस्यापि भो साधो यथास्थितिमुदाहर ।
न हि गोप्यं सुमहतां कृपालूनां विशेषतः ॥ ४ ॥

शाण्डिल्य उवाच—

अथातः श्रूयतां विप्राः संप्रदायं पुरद्विषः ।
यत्र प्रसन्नो मनुजो हरेः प्रियतमो भवेत् ॥ ५ ॥
एकदा शङ्करो देवो गतो गोकुलमण्डलम् ।
तत्र वृन्दावने रम्ये सच्चिदानन्दमन्दिरे ॥ ६ ॥
त्रिभङ्गललितं देवं कोटिमन्मथसुन्दरम् ।
अनौपम्यं वेणुधरं व्रजस्त्रीगणसेवितम् ॥ ७ ॥
श्रुतिभिर्मुनिभिश्चैव सेव्यमानं मुदान्वितम् ।
प्रणिपत्य मुदा देवः सामगानादतोषयत् ॥ ८ ॥

जगतो हि समुद्धर्तुं संप्रदायस्य लब्धये।
तस्मै ददौ प्रसन्नात्मा तत्रत्यानामनुग्रहात् ॥ ९ ॥
स लब्ध्वा परमं लाभं स्वधाम संन्यवर्तत।
परमानन्दसंमग्नो नृत्यं चक्रे दिगम्बरः ॥ १० ॥
तं दृष्ट्वा परमाश्चर्यं नारदो देवसंमतः।
तदा हर्षसमाविष्टो नारदेन प्रसादितः ॥ ११ ॥
जगौ तदेव सन्मार्गं श्रुत्वा यच्छ्रीपतेर्मुखात्।
नारायणाच्च शेषाच्च मन्त्रभागैर्निजात्मनः ॥ १२ ॥
नारदोऽपि महायोगी परमानन्दपूरितः।
अलंप्रसादितः प्रादाद् व्यासायामिततेजसे ॥ १३ ॥
कौण्डिन्याय मया प्रोक्तो गर्गाय च महात्मने।
व्यासस्तु वक्ति पुत्राय बह्मराताय विष्णवे ॥ १४ ॥
अथो कलौ संप्रवृत्ते पूर्वाचार्यैरथागतैः।
भविष्यति परा भक्तिः किंचित्कालं मुनीश्वराः ॥ १५ ॥
वेदवेदान्ततत्वज्ञैर्वैष्णवैर्ब्राह्मणोत्तमैः।
निर्वाहिता ततो भक्तिर्लुप्तप्राया भविष्यति ॥ १६ ॥
ततोऽपि श्रीपतेरस्य स्वीयानुगृह्णतो हरेः।
माथुरे मण्डले तत्र गोकुलेऽस्मिन् गिरावपि ॥ १७ ॥
प्रादुर्भविष्यति महापुरुषैरुपभाविता।
तस्याः संप्रीयते तत्र संप्रदायं रिरक्षिषुः ॥ १८ ॥
महात्मा सुमहातेजा भगद्वदनोदितः।
प्रादुर्भविष्यति ततः सर्वश्रुतिविशारदः ॥ १९ ॥
योगी योगीश्वरस्तं वै संप्रदायं वदिष्यति।
भगवानपि तं साक्षादुपदेष्टा निजागमम् ॥ २० ॥
आसाद्य गोकुलं धाम भक्तिं संवर्द्धयिष्यति।
गिरिराजं तथा प्राप्य महात्मैकान्तसंश्रयैः ॥ २१ ॥
निर्गुणं भक्तिमार्गं तु वर्धयित्वा चरिष्यति।

निजात्मप्रेमसम्पूर्णैर्भगवद्ध्यानतत्परैः ॥ २२ ॥
तद्रसाक्षिप्तचित्तानां स्वाचारपरिवर्तिनाम् ।
सर्वभूतैकसुहृदां वेदप्रामाण्यमीयुषाम् ॥ २३ ॥
विरलेष्वेव भविता संप्रदायो ह्यनुत्तमः ।
आश्चर्याणि चरित्राणि कृत्वा नानाविधान्यसौ ॥ २४ ॥
स्थापयिष्यति वै तस्याः पारम्पर्यक्रमं कुलम् ।
समुद्धृत्य ततो जीवान्हरेः प्रीतिं करिष्यति ॥ २५ ॥
ततः कतिपये काले कालदोषप्रभावतः ।
विलयं यास्यते पन्थाः कापट्येनाकुलः परः ॥ २६ ॥
परद्वेषान्वितैः पुम्भिर्निजाचारपराङ्मुखैः ।
परस्त्रीलम्पटैर्लुब्धैः कोपनैर्बालिशैः शठैः ॥ २७ ॥
इत्येवं हि समाख्यातं संप्रदायं पुरद्विषः ।
पुरुषोत्तममारभ्यलीलास्थानां हरेर्मुदे ॥ २८ ॥
अयमेव परः पुण्यो भक्तिशास्त्रैकसम्मतः ।
एतन्माहात्म्यमतुलं नालं वक्तुं चतुर्मुखः ॥ २९ ॥
अयं हरेः श्रीव्रजदेवताया अनुगृहीतः किल संप्रदायः ।
आविर्बभौ वेणुग्रहीतवेदैर्विभावयध्वं त्रिपुरारिसम्मतम् ॥ ३० ॥

इति श्रीशाण्डिल्यसंहितायां भक्तिखण्डे त्रिपुरारिसंप्रदायनिरूपणं नाम पञ्चमोऽध्यायः ॥ ५ ॥

——*——

## षष्ठोऽध्यायः ।

ऋषय ऊचुः—

कथं वेणुग्रहीता वै वेदा वेदविदांवर ।
कथं च निर्गुणा भक्तिर्गिरावस्मिन्भविष्यति ॥ १ ॥
सात्विकी राजसी चापि तामसी च कथं भिदा ।
फलभेदः कथं तत्र ह्यधिकारी च कीदृशः ॥ २ ॥
किं विधेयं किमादेयं परिहेयं च किं पुनः ।

किमुपेक्षं किमाहृत्यं सर्वं वद कृपानिधे ॥ ३ ॥

शाण्डिल्य उवाच—

सावधानधियो भूत्वा शृणुध्वं मुनिसत्तमाः।
श्रीकृष्णभक्तिमाहात्म्यविस्तारं कथये यथा ॥ ४ ॥
देवोऽसुरो मनुष्योऽपि पशुपक्षिद्रुमाश्च ये।
सर्वेषामधिकारोऽत्र भजने परमात्मनः ॥ ५ ॥
ब्राह्मणा क्षत्रिया वैश्याः स्त्रियः शूद्रास्तथान्त्यजाः।
अधिकारानुरूपेण भजन्तः श्रेय आप्नुयुः ॥ ६ ॥
वर्णाश्रमेण धर्मेण ज्ञानविज्ञानशालिना।
वैराग्येण गुरोर्लब्धा भक्तिः सा सात्विकी हरेः ॥ ७ ॥
विशुद्धचेतसः पुंसो महतां समनुग्रहात्।
चेतसामुन्नतिर्नित्या मुख्यैषा सात्विकी भवेत् ॥ ८ ॥
सर्वत्र भगवद्भावः सर्वत्रैवानुकम्पनम्।
सात्विकाचरणात्पुंसो भजनं सात्विकं मतम्॥ ९ ॥
यज्ञैर्दानैः स्वधर्मेण ये भजन्ति सुमेधसः।
विच्छिन्नवृत्तयो भक्ता राजसास्ते प्रकीर्तिताः ॥ १० ॥
देशज्ञातिकुलानां च अभिमानेन संयुताः।
स्वधर्मेण हरेरर्चां कुर्वन्तो राजसा मताः ॥ ११ ॥
मूढात्मानोऽतिविक्षिप्तचेतसो दृढनिश्चयात्।
यथोपदेशं कुर्वाणा भजनं तामसास्तु ते ॥ १२ ॥
संरम्भेण निजार्थेन अविविक्ताऽऽग्रहेण वा।
शास्त्रैकदेशमाश्रित्य भजनं तामसं मतम् ॥ १३ ॥
शमो दमः स्तपः शौचं वैराग्यं ज्ञानमात्मता।
दया दानं तथा धैर्यं सात्विकानां स्वभावतः ॥ १४ ॥
दया दानं तपः शौचं स्वाहङ्कारक्षमान्विता।
उत्साह उद्यमादीनि राजसानां स्वभावतः ॥ १५ ॥

मौढ्यमाग्रहवादश्चादार्ढ्यं कार्येष्वनुद्यमः ।
मोहो द्रोहो वृथैवेहा तामसानां स्वभावतः ॥ १६ ॥
श्रवणात्कीर्तनाद्ध्यानान्महतां पादसेवनात् ।
मनोगतिरविच्छिन्ना दीपार्चिरिव शाश्वती ॥ १७ ॥
अनिमित्तनिमित्तेन धर्मेण बहुजन्मना ।
अनुग्रहाद्भगवतो भक्तिः स्यान्निर्गुणा क्वचित् ॥ १८ ॥
सर्वत्र सर्वदा सर्वं तदर्थं शुभचेष्टितम् ।
सर्ववस्त्वभियोगश्च निर्गुणस्य उदाहृतः ॥ १६ ॥
निजेशचरणाम्भोजसेवनातः पृथग्धिया ।
मोक्षोऽपि नाभिलषितो भक्तानां निर्गुणात्मनाम् ॥ २० ॥
सदा तद्गुणगानेन सदा तत्परिचर्यया ।
सदा तद्भक्तसङ्गेन परमानन्दनिर्वृताः ॥ २१ ॥
भगवन्नामधामार्चालीलाभक्तजनाश्च ये ।
यच्चान्यद्भगवन्निष्ठनिर्गुणं समुदाहृतम् ॥ २२ ॥
प्राकृतैर्नश्वरैरेतैर्निरानन्दैरचेतनैः ।
भिन्नात्मभिः स्वीयधर्मैः पदार्था रहिता (?) विभोः ॥ २३ ॥
सात्विकास्तस्य सारूप्यसार्ष्टिसायुज्यभागिनः
सालोक्यं राजसादीनामेकत्वं निर्गुणात्मनाम् ॥ २४ ॥
सारूप्यं शङ्खचक्राद्यैर्विना श्रीवत्सकौस्तुभैः ।
समानैश्वर्यमप्येवं जगद्व्यापारवर्जितम् ॥ २५ ॥
सायुज्यं सेवया तस्य तदानन्दात्मताऽपि वा ।
सर्वानन्दानुभूतिर्या एकत्वं स्यात्तदात्मता ॥ २६ ॥
सर्वानन्दमयी लीला नित्या चैतन्यरूपिणी ।
दिव्येन्द्रियैरात्मनाऽस्यां निवेशो निर्गुणात्मनाम् ॥ २७ ॥
सर्वं ब्रह्मात्मकं विश्वं ब्रह्मणैव प्रकाशितम् ।
नित्यं शुद्धस्वरूपं च कनके कटकादिवत् ॥ २८ ॥

तस्यैव वाञ्छया पुंसो निजानन्दात्मषड्गुणम्।
तिरोहितं तु जीवेभ्यो निजांशेभ्यो विसृष्टये ॥ २९ ॥
आब्रह्मस्तम्भपर्यन्तनानायोनिषु सङ्गतैः।
नानुभूतोऽनुभूतोऽर्थो विनिश्चत्यागमाद्‌ गुरोः ॥ ३० ॥
अनुभूतार्थलब्ध्यर्थं यतमानैर्महात्मभिः।
सेव्यते जगतां नाथो गोवर्द्धनधरो हरिः ॥ ३१ ॥
मयात्र संस्थितेनेशः सदैव हृदि संस्मृतः।
नवीननीरदश्यामो नीलेन्दीवरलोचनः ॥ ३२ ॥
पीनवक्षाः पृथुश्रोणिः कम्बुकण्ठोऽल्पकोदरः।
वृत्तावगूढजङ्घादिप्रांशुग्रीवस्तथोन्नसः ॥ ३३ ॥
राकेन्दुचारुवदनो नीलालकविराजितः।
अम्भोजपल्लवाङ्घ्रिभ्यां नखचन्द्रकलां दधत् ॥ ३४ ॥
रत्नकिङ्किणिसंसक्तपीतपीताम्बराञ्चितः।
वलिवल्गुदरोनाभिगाम्भीर्यागीर्णविष्टपः ॥ ३५ ॥
सुविस्तीर्णोरसा बिभ्रदनौपम्यां महेन्दिराम्।
हारग्रैवेयरुचकनिष्कमालाविभूषितः ॥ ३६ ॥
वैजयन्तीस्रजा युक्तो वनमालोल्लसोल्लसत्।
ऊर्मिकावलयाद्यैश्च केयूरालम्बसद्भुजः ॥ ३७ ॥
हीरकोद्दीप्तचुबुको गजमौक्तिकनासिकः।
संशोभिशोणतिलकः स्फुरन्मकरकुण्डलः ॥ ३८ ॥
मायूरमुकुटो वेणुवेत्रहस्तोऽतिसुन्दरः।
किशोरो दर्शनीयाङ्गः सर्वाभरणभूषणः ॥ ३९ ॥
कोटीन्दिरासेविताङ्घ्रिः कोटीन्दुद्युतिशीतलः।
कोटिकल्पद्रुमामोदः कोटिकौस्तुभभासुरः ॥ ४० ॥
कोटिचिन्तामणिस्थानः कोटिकामद्रुमाङ्गणः।
मन्दस्मितोऽतिकरुणः स्निग्धापाङ्गावलोकनः ॥ ४१ ॥

गोपालबालकैः क्रीडन्कदाचित्प्रादुरास ह ।
साष्टाङ्गप्रणतं दीनमनुकामयोचिवान्विभुः ॥ ४२ ॥
साधु साधो महाभाग मद्भक्त्या मां भजन्निह ।
स्थितः सुतपसा सिद्धः शाण्डिल्य वृणु वाञ्छितम् ॥ ४३ ॥
निर्गुणोऽहं निराकारो निष्क्रियोऽहं निरञ्जनः ।
केवलानन्दमात्रात्मा स्वतन्त्रः स्वेच्छकार्यकृत् ॥ ४४ ॥
आत्मरूपा ज्योतिरूपा मदेकशरणा सती ।
करोति लीलानाम्नी सा यद्यदिष्टतमं मम ॥ ४५ ॥
आनन्दमात्रावयवः किशोरः श्यामलाकृतिः ।
विहरामि सदा तस्यां नित्यलीलाविभूतिभिः ४६ ॥
कदाचिच्छ्रुतयः साम्नां सिद्धाः कीर्तनभक्तितः ।
मदनुग्रहमायाता एवं भूतं समीक्ष्य ताः ॥ ४७ ॥
स्मिता लुलुभिरे सर्वा वेणुना चुम्बितेऽधरे ।
तमेव प्राविशन् रक्ता रागरूपेण मद्गताः ॥ ४८ ॥
अन्या अपि ततो लब्धुं लुब्धात्मानो गिरः सतीः ।
गिरावस्मिन्तपस्यन्तीः कृत्वाऽऽपुर्भक्तिसङ्गताः ॥ ४९ ॥
तदर्थमहमत्रैव व्यापि वैकुण्ठसङ्गतः ।
प्रादुर्भूतस्ततो लोके व्रजनात्स व्रजो मतः ॥ ५० ॥
वेणुना तेन ताः सर्वाः समाहूता व्रजस्त्रियः ।
प्रावर्तयन्नहो दिव्यां साक्षाद्भक्तिमनुत्तमाम् ॥ ५१ ॥
निर्गुणां तां त्वमातिष्ठ मम भक्तिं मनोहराम् ।
इमां लीलां यदि ब्रह्मन्प्रवेष्टुं संप्रतीक्ष्यसे ॥ ५२ ॥
योगमायेति लीलायाः काचिन्मे प्रतिहारिणी ।
प्रवेशयति सा नान्यं भ्रामयन्ती स्वमायया ॥ ५३ ॥
एवमुक्त्वा ततो देवो दत्तवान्स्वस्त्रजं मम ।
अनया संप्रवेशोऽत्र कामचारो भविष्यति ॥ ५४ ॥

ततः कृताञ्जलिरहं बाष्पपर्याकुलेक्षणः।
ऊचे नाथ रमानाथ करुणावरुणालय ॥ ५५ ॥
कृपानाथ प्रभो देव यशोदाप्राणवल्लभ।
कृतं मद्वाञ्छितं भव्यं स्वयं सर्वं विजानता ॥ ५६ ॥
श्रीमच्चरणराजीवं जीवतां किं नराशिषः।
कथं चिच्च सकृद्वापि स्मरणात्सकलार्थदः ॥ ५७ ॥
क्वाहं दीनतरो हीनसाधनो भववञ्चितः।
स्वीयानुकम्पया येन स्वकीयोऽहं स्वयं कृतः ॥ ५८ ॥
एतन्मे वाञ्छितं नाथ भ्रमतः कर्मणा भुवि।
प्रीतिर्भवेदविच्छिन्ना चरणाम्भोजयोस्तव ॥ ५९ ॥
श्रीमताऽनुग्रहीतोऽहमभीतोऽहमतः परम्।
तथापि सा कथं ज्ञेया कथं कार्या भवेदिति ॥ ६० ॥
पृष्टः प्राह प्रभुः प्रीतो मम शृङ्गात्तु पश्चिमे।
शृङ्गारमण्डलं दिव्यं बहिस्तस्य सरोवरम् ॥ ६१ ॥
तत्रैका ललितानाम्नी मुनिकन्या तपोमयी।
मत्प्रियानुग्रहीतैषा आचारं तेऽभिधास्यति ॥ ६२ ॥
इमं मे परमं मन्त्रं स्वयमेवाहमर्पये।
अनुगृह्य परान्विप्र मत्सकाशं ततो व्रज ॥ ६३ ॥
एवमुक्त्वा तिरोऽधत्त तत्रैव व्रजवल्लभः।
ततोऽहं तद्दिशं नत्वा स्थितोऽस्मि मुनिसत्तमाः ॥ ६४ ॥
सा कन्या मामुपव्रज्य स्वयमाह हरेर्मता।
प्रणताय प्रपन्नाय दिव्यज्ञानासुरैर्नुता ॥ ६५ ॥
वेदवेदान्तसच्छास्त्रैर्विज्ञाय भगवद्गतिम्।
स्थित्वा निजाश्रमाचारे सात्विके कर्मणि स्थितः ॥ ६६ ॥
निवृत्तिमार्गनिरतः सर्वेषामुपकारकृत्।
सरलोऽनालसो दक्षो मैत्रः कारुणिकोऽशठः ॥ ६७ ॥

शान्तो दान्तः शुचिर्धीरो महतां पादसेवकः ।
भगवद्भक्तसङ्गेन जातश्रद्धो दृढोऽच्युते ॥ ६८ ॥
कुलीनं भगवद्भक्तं वेदवेदान्ततत्परम् ।
श्रीभागवतशास्त्रज्ञं शान्तं दान्तं सदा शुचिम् ॥ ६९ ॥
जितचित्तेन्द्रियं दिव्यं सर्वदोषविवर्जितम् ।
परम्पराप्राप्तविद्यमेवंभूतं गुरुं भजेत् ॥ ७० ॥
उपदिष्टस्ततस्तेन वैष्णवाचारतत्परः ।
श्रीगोपालं भजेत्प्राज्ञो मूर्त्याभिमतया विभुम् ॥ ७१ ॥
प्रातरारभ्य सायाह्नावधिर्नित्यं समाहितः ।
प्रेम्णा परिचरन्साधु विरक्तः संस्कृतो भवेत् ॥ ७२ ॥
विधेयं विधिना तेन श्रवणादिमहज्जनैः ।
आदेयं यत्तदीयं च शास्त्रं कर्म च चेष्टितम् ॥ ७३ ॥
परिहार्योऽप्यभक्तानामसतामपि संश्रयः ।
विरुद्धाचरणं चान्यदधर्माचरणं तथा ॥ ७४ ॥
गृहापत्यकलत्रादिसंसारासक्तिकारणम् ।
उपेक्ष्याविमुखा लोकाः कथायां हरिमेधसः ॥ ७५ ॥
अनुकूलं सदा देयं स्वधर्माचरणं तथा ।
गुरोः समुपदिष्टं यद्यच्च भक्तोपकारकम् ॥ ७६ ॥
यावद्भेदाभिमानो हि कार्यबुद्धिश्च सेवने ।
तावत्तु सगुणा भक्तिः कर्तॄणां विद्धि तत्वतः ॥ ७७ ॥
यद्विधोऽस्या भवेत्कर्ता सा प्रोक्ता तद्विधा बुधैः ।
भूम्याः सम्पर्कतो वारि मधुरं विरसं यथा ॥ ७८ ॥
यदात्मरूपिणी सैव अहंप्रत्ययसाक्षिणी ।
संशयेन समुत्कीर्णा तदा निर्गुणतां गता ॥ ७९ ॥
विषया नावभासन्ते देहधर्मास्तथेन्द्रियाः ।
प्रक्षीणवृत्तिर्भक्तेश असौ निर्गुणतां गतः ॥ ८० ॥

त्वमप्येवंविधो विप्र भव तेनाशु सिध्यसि।
इत्युक्त्वा सा गता मह्यं तथाहं करवाणि भोः॥ ८१॥

इति श्रीशाण्डिल्यसंहितायां पञ्चमे भक्तिखण्डे शाण्डिल्योपदेश-
निरूपणं नाम षष्ठोऽध्यायः॥ ६॥

——:o:——

## सप्तमोऽध्यायः।

ऋषय ऊचुः--

कर्तॄणां गुणसङ्गेन भक्तीनामीष्यते भिदा।
निर्गुणा तु कथं सा स्यात्कर्ता न गुणवर्जितः॥ १॥
शाण्डिल्यमुनिशार्दूल एष नः संशयो महान्।
छिन्धि भो सूक्तिधाराभिर्भवान् भगवतः प्रियः॥ २॥

शाण्डिल्य उवाच--

निर्गुणोऽपि भवेत्कर्ता यथैव परमेश्वरः।
यथैव तरणिस्तिष्ठन् प्रकाशयति विष्टपम्॥ ३॥
कूटस्थेऽप्यपरिष्यन्दिक्रियाकोटिर्निरर्गला।
जीवोऽप्यस्ति निराकारो निरानन्दोऽथ निष्क्रियः॥ ४॥
निर्गुणे केवलानन्दे स्वप्रकाशे परात्मनि।
सर्वात्मनाभिवेशे यः स एवाप्राकृतो मतः॥ ५॥
यथा वीरो रणे वृत्तिमेकरूपां प्रपद्यते।
भिनत्ति तरणेर्बिम्बं धीराणां मेद्यमञ्जसा॥ ६॥
एवं वैरेण केषांचिद्भयेन जगदीशितुः।
कामादिभिस्तदिच्छातो वृतेरैक्यं प्रजायते॥ ७॥
सर्वत्र भासते सैव व्यावृत्तस्यापि सर्वतः।
यथा जारं व्रजन्ती स्त्री न विन्दति भुवः श्रमम्॥ ८॥
योगेऽप्यभिमते ध्याने फलं बह्वैव केवलम्।
वृत्तिरोधेन लोकानां भवेच्छास्त्रप्रचोदितम्॥ ९॥

ब्रह्मैव पुत्रभार्यादि वस्तुतो मायया वृतम् ।
तत्रानुरागः सर्वेषां शास्त्रहीनं न मुक्तिदम् ॥ १० ॥
शास्त्रेण वा स्वरूपेण वस्तुनः सिद्धिरिष्यते ।
हरौ तूभयतः सिद्धिः कथं न भवति द्विजाः ॥ ११ ॥
निर्गुणो हि हरिः साक्षाद्येनासौ समुपासितः ।
अनन्यवृत्त्या तस्यात्र कर्तुर्निर्गुणता मता ॥ १२ ॥
विषयान्तरसंवित्तिव्यावृत्तहृदयस्य या ।
वृत्तिरात्यन्तिकी स्निग्धा निर्गुणा समुदाहृता ॥ १३ ॥
स्वतन्त्रस्य हरेरिच्छां नियन्तुं नैव शक्यते ।
यतोऽस्य प्रीतिपात्राणां भवे निर्गुणता भवेत् ॥ १४ ॥
सनकाद्या मुनिश्रेष्ठा निर्गुणा वैष्णवोत्तमाः ।
तथैवास्य प्रिया ज्ञेयाः संपन्नाः कृपया विभोः ॥ १५ ॥
हृदि नित्यं विहरते भगवान् भक्तवत्सलः ।
सगुणा निर्गुणास्ते स्युः कृतकृत्याः सुरैर्नुताः ॥ १६ ॥
न विष्णुभक्तमाहात्म्ये वैचित्र्यं किञ्चिदिष्यते ।
येषां प्रसङ्गतोऽप्यन्ये मुच्यन्ते नारका अपि ॥ १७ ॥
बहुजन्मकृतैः पुण्यैः श्रीशस्याप्यनुकम्पया ।
दैवात्मसंपदां पुंसां कृष्णे भक्तिः परात्मनि ॥ १८ ॥
भक्तिलीने भवेच्छ्रद्धा श्रवणादौ गुणेष्वतः ।
भवेत्प्रेमपरिस्फूर्तिरनन्यास्मिन्नहैतुकी ॥ १९ ॥
आसक्तिः शीलनात्तस्य कामिनीनां यथा धवे ।
तया विरक्तिः सर्वत्र एतद्धर्माधिरोहणम् ॥ २० ॥
ततोऽस्य व्यसनं भक्तेर्बाधकाः स्युस्तथेतराः ।
क्षणमात्रवियोगेऽपि जीवनं नैव संभवेत् ॥ २१ ॥
तदैव गद्गदादीनि गानं नित्यं च रोदनम् ।
आनन्दसंप्लवो निद्राभङ्गस्तैमित्यमिष्यते ॥ २२ ॥

शान्तवृत्तिः स एव स्यान्निर्गुणो निरपाश्रयः ।
मुकुन्दात्मा विनिर्धूतदेहभासा प्रसन्नधीः ॥ २३ ॥
तस्यैतत्साधनाभ्यासो क्रमयोगेन सिध्यति ।
ललितोक्तिर्मुनिश्रेष्ठाः सर्वानुभवसम्भवा ॥ २४ ॥
विरक्तोऽप्यशुचिः शान्तो मितभुग् जितषड्गुणः ।
पुण्यैकान्ते समासीनो लब्धविद्यो गुरोरयम् ॥ २५ ॥
यथालब्धोपचारेण भक्तियोगेन सेवयेत् ।
सदा भक्तप्रसङ्गेषु कुर्वन्भगवतः कथाः ॥ २६ ॥
एक एव सदासीनो गायमानो गुणान्विभोः ।
भावयेत्तस्य ता लीला याभिश्चित्तं प्रसीदति ॥ २७ ॥
बालकैशोरपौगण्डवयःसुन्दरमूर्तिभिः ।
अङ्गप्रत्यङ्गसुषमापरिवारमनोहरम् ॥ २८ ॥
नानाविहारस्थानानि चिन्तयन्भगवन्मयः ।
विशुद्धात्माभिलभते रुचिमस्मिन्मनस्यपि (?) ॥ २९ ॥
लब्धसाक्षाद्रुचिश्चित्तं तदन्यस्मिन्विरज्यति ।
स्वप्नमोहाद्यवस्थासु तमेवैकं प्रपश्यति ॥ ३० ॥
आसज्यते ततो भक्त्या गोविन्दचरणाम्बुजे ।
सपर्यासु कथास्वस्य न विन्दति मनाक् श्रमम् ॥ ३१ ॥
अत्यासक्त्या यदा किञ्चिद्यं विना नाभिविन्दति ।
तदैव कृतकृत्योऽयं भवेत् सिद्धात्मभावनः ॥ ३२ ॥
सगुणा साधनापन्ना सिद्धावस्था तु निर्गुणा ।
केषाञ्चिदेव सा साक्षात्प्रसादान्मुरवैरिणः ॥ ३३ ॥
भक्तिश्चतुर्विधा साध्या तस्याऽनुग्रहसम्मिता ।
क्रियामिश्रास्तपोमिश्रा गुणमिश्राश्च निर्गुणाः ॥ ३४ ॥
आद्याः सर्वाः समाख्याताश्चरमाः पुनरुच्यते ।
भक्तिरेव फलं ब्रह्मन् हरिरेव हि साधनम् ॥ ३५ ॥

हरेरपि हरेर्भक्तिः सात्र भक्तिः स्वयम्वरा ।
ययेश्वरस्यापि कष्टा कल्पना संहृतिः स्वयम् ॥ ३६ ॥
लीलासु यत्र सर्वासु हेयोपादेयताभ्रमः ।
निवर्तते सा श्रद्धेये निरपेक्षापि याऽन्यतः ॥ ३७ ॥

इति श्रीशाण्डिल्यसंहितायां पञ्चमे भक्तिखण्डे भक्तिस्वरूपनिरूपणं नाम सप्तमोऽध्यायः ॥ ७ ॥



## अष्टमोऽध्यायः ।

शाण्डिल्य उवाच—

अथ दीक्षां प्रवक्ष्यामि मन्त्रराजस्य भो द्विजाः ।
देहेन्द्रियात्मधर्माणां दिव्यभावं यतो भवेत् ॥ १ ॥
कुलत्रये विशुद्धेऽपि स्वयं चापि त्रिधा शुचिः ।
गोविन्दैकप्रपन्नात्मा गुरुः संसारतारकः ॥ २ ॥
शमादिगुणसंपन्नः शीलाचारकुलैः शुचिः ।
भवपाशमुमुक्षुर्यः शिष्य एवंविधो द्विजः ॥ ३ ॥
स्वस्वाचारविनिर्धूतचित्तः साधुजनप्रियः ।
निवृत्तिशास्त्रश्रवणाज्जातनिर्वेदमानसः ॥ ४ ॥
सोपायनकरः शान्तः शुद्धोऽतिसरलो नतः ।
प्रणिपत्य गुरोः पदौ निर्विशेदनुकम्पितः ॥ ५ ॥
ततो बद्धाञ्जलिपुटो प्रणतः प्रणयार्द्रधीः ।
विज्ञापयेद्धरिं साक्षाद्गुरुं गौरवतो गिरा ॥ ६ ॥
श्रीमदाचार्य भगवन् करुणाकर भो गुरो ।
कृत्वा कृपां मां शरणीकुरु मृत्युभयार्दितम् ॥ ७ ॥

अहन्तामामताग्राहैर्गीर्णं संसारसागरे ।
शक्तो मोचयितुं साक्षाद्भगवान्हि गरुडध्वजः ॥ ८ ॥
इत्युक्तवन्तं विनतं ज्ञात्वा शीलकुलादिभिः ।
ज्ञाताज्ञातैनसां चीर्णव्रतं शुद्धमथातुरम् ॥ ९ ॥
श्रीकृष्णं शरणं कुर्याद्दद्यात्तं वैष्णवीं स्रजम् ।
वासयेदन्तिके तस्य ज्ञातुं शीलादिकं गुणम् ॥ १० ॥
विरक्तः सोऽपि भोगेभ्यः पुत्रवद्वृत्तिमद्गृहम् ।
विहाय निवसेत्तत्र सेवमानः शुचिर्यथा ॥ ११ ॥
स ताम्रालाबुजैः पात्रैः शुद्धैः शुभैस्तथाम्बरैः ।
शिक्षन्भागवतान् धर्मान् वसेद् भैक्ष्यमिताशनः ॥ १२ ॥
वैष्णवाश्रममाश्रित्य चरेद्धर्मं निबोधयन् ।
ब्राह्मे मुहूर्ते चोत्थाय ध्यायेद् गायेद्धरिं गुरुम् ॥ १३ ॥
कृत्वा शौचं बहिर्बाह्यं तीर्थे स्नात्वा धृतांशुकः ।
मृदोर्ध्वपुण्ड्रमुद्रादि दधत् श्रद्धाऽऽसनस्थितः ॥ १४ ॥
सन्ध्यां जपं च सावित्र्या ब्रह्मयज्ञं च तर्पणम् ।
यथावकाशं निर्वर्त्य गुरुसेवां समाचरेत् ॥ १५ ॥
हरेः सेवां गुरोः सेवां प्रेम्णा नित्यं यथाविधि ।
कुर्याद् गुरोरनुमतो भक्तिशास्त्रं सदाभ्यसेत् ॥ १६ ॥
अभ्यस्य भक्तिशास्त्राणि प्रणामादिविधानतः ।
गुरोरनुज्ञामादाय गत्वा स्वीयनिकेतनम् ॥ १७ ॥
सम्पन्नहरिभक्तेभ्यो भिक्षां शुष्कान्नमाहरेत् ।
एकान्नं सुहृदः शुद्धं शुचिरेव स्वयं पचेत् ॥ १८ ॥
पक्त्वा निवेद्य हरये विभज्य द्विजवैष्णवान् ।
शक्त्या सुरेभ्यो हुत्वा च भुञ्जीतान्नं मितं लघु ॥ १९ ॥
आचम्य धौतहस्तादिर्मुखं वासो विधाय च ।
उच्छिष्टमार्जनं कृत्वा लेपाद्यैः पुनराचरेत् ॥ २० ॥

ततः शुद्धः पुनः सेवां गुरोः कुर्यात्तदाज्ञया ।
भक्तिशास्त्राणि सेवेत स्नात्वाऽथो सेवनं हरेः ॥ २१ ॥
सायंसन्ध्यां विधायैव कीर्तयेद्भगवद्यशः
हरिभक्तप्रसङ्गेन गुरोर्वा शृणुयादिदम् ॥ २२ ॥
रात्रौ गुरुं परिचरेत्पादसंवाहनादिषु ।
ततः शयीत शुद्धात्मा कटे वा कम्बलादिषु ॥ २३ ॥
एवं कुर्वन्तपस्तीव्रं जातभक्तिरुचिः पुमान् ।
निवेदयेन्निजात्मानं गुरोरनुमतेन च ॥ २४ ॥
संशोध्य स्वगृहं सर्वं देहं चापि व्रतादिभिः ।
गुरोरनुज्ञामादाय एकादश्यामुपोषितः ॥ २५ ॥
यज्ञोपवीतमालादि नवं धृत्वा यथाविधि ।
द्वादश्यामुषसि स्नात्वा कृत्वा तत्रैव चाह्निकम् ॥ २६ ॥
पुनः स्नात्वा तीर्थतोयः कौशेयाम्बरधृक्शुचिः ।
गुरोः समीपमागत्य कृत्वा मुद्राभिधारणम् ॥ २७ ॥
तस्याऽनुकम्पितः श्रुत्वा महाभागवतागमम् ।
गत्वा हरिपदं तत्र धृत्वैवो शयनं पुरः (?) ॥ २८ ॥
प्रणमेद्दण्डवद्देवं गृह्णीयात्सुव्रतं हरेः ।
गुरुस्तस्मै वदेच्छित्त्वां सद्यः संसारमोचनीम् ॥ २९ ॥
उपदेशविधानेन पुराणार्थं समादिशेत् ।
अधिकारं गुरुर्ज्ञात्वा बोधयेत्तं द्विजोत्तमम् ॥ ३० ॥
आनन्दमात्रममलं फुल्लेन्दीवरसुन्दरम् ।
किशोरं सस्मितं कान्तं नयनानन्दवर्धनम् ॥ ३१ ॥
श्रुतिरूपव्रजस्त्रीणां रासे लास्यपरं वरम् ।
निगमागमसङ्गीतमहिमं करुणाकरम् ॥ ३२ ॥
विद्धि भो परमं तत्त्वं श्रीमन्तं नन्दनन्दनम् ।
तस्यैवासीद्गिरं सान्तः कदा क्वापि चिदंशतः (?)॥ ३३ ॥

मायया संवृतो मुग्धो जीवभावं दृढं गतः ।
आनन्देन स्वरूपेण सद्धर्म्मे रहितो यतः ॥ ३४ ॥
भ्रमतेऽस्मिन्महामोहे अहंममभवोदरे ।
आब्रह्मस्तम्भपर्यन्तं नानायोनिमहाभये ॥ ३५ ॥
ध्यायन्सुखं पुत्रमित्रभार्यादिधनधामसु ।
श्वशूकरादिवज्जन्तुः कष्टं मृत्युं च विन्दति ॥ ३६ ॥
विस्मृत्यैनं हरिं देवं स्वामिनं च सदा सताम् ।
लीलां च तद्वियोगस्य स्मृतिं सुखस्वरूपिणीम् ॥ ३७ ॥
विद्यया जन्मना चापि कर्मणापि धनेन च ।
ईश्वरोऽहं बली भोगी एवं कुर्वे सुखं लभे ॥ ३८ ॥
एवं नानाविधाभिस्त्वं दुराशाभिः स्थितः सदा ।
अधुनाऽनुग्रहात्पुंस ईश्वरस्याप्तशेमुषी ॥ ३९ ॥
देहेन्द्रियान्तःकरणं तद्धर्माश्चापि सर्वशः ।
दारागारसुताप्तादिवसुलोकमिमं परम् ॥ ४० ॥
प्राणांश्चापि तथात्मानं सर्वं मे हरयेऽर्पितम् ।
निवृत्ताहंममत्वेन कुर्वे वर्तेऽथ यत्प्रभो ॥ ४१ ॥
दासोऽहं कृष्ण तवास्मीत्येवं वै भावये हरेः ।
न ततो बन्धनं मे स्यात्कृपया भगवन्तव ॥ ४२ ॥
इत्थं सम्भावयत्येवमादिष्टोऽथ सकृद्धृदा ।
सङ्कल्प्य सर्वं तस्यैव पादयोरर्पयेद्धरेः ॥ ४३ ॥
साष्टाङ्गं प्रणिपत्याथो पादाब्जे श्रीगुरोः स्पृशेत् ।
प्रसाददानं गुरुणा कृतं चेद्दास्यकृद्भवेत् ॥ ४४ ॥
मुक्त्वाहंममतां धीरो भजेद्द देवमहर्निशम् ।
गोपिका इव संरक्तश्चरणाम्भोजयोर्हरेः ॥ ४५ ॥
तदाप्रभृति दारेषु पुत्रमित्रधनेषु च ।
स्वस्वाम्यं च ममत्वं च त्यजेदेवं जितेन्द्रियः ॥ ४६ ॥

रागी चेद्गुरुणाऽऽज्ञप्तो यावद्दास्यं प्रवर्तताम् ।
तथापि तस्य सा सिद्धिः कष्टसाध्या मतिर्मम ॥ ४७ ॥
स्वाम्यं हि द्विविधं देहे दैहिकं जैवमप्यथ ।
दैहिकं स्यात्पराधीनं लोकतः शास्त्रतोऽपि वा ॥ ४८ ॥
दासीनां लोकतः स्त्रीणां शास्त्रादेवं परत्र च ।
निवृत्तं दैहिकं तेन जैवं तेभ्यो निवर्तयेत् ॥ ४९ ॥
गुरोः प्रपत्तिमुद्दिश्य नान्यथा तानि संस्पृशेत् ।
विरक्तो हरिधामानि पुण्यस्थानानि वाश्रयेत् ॥ ५० ॥
समुच्चरेन्महामन्त्रं श्रीकृष्णः शरणं मम ।
जपेच्चापि शुचिः स्नातः श्रीगोपालमहामनुम् ॥ ५१ ॥
अनन्यशरणो दासोऽहमित्येवं हृदा स्मरन् ।
गायमानो गुणान्विष्णोश्चरेदविधिगोचरः ॥ ५२ ॥
क्वचित्प्रेमाश्रुनिर्भिन्नपुलको मौनमाश्रितः ।
क्वचित्स्मरन् विप्रयोगं हरे रोदिति रौति वा ॥ ५३ ॥
क्वचित्तदानन्दपूर्णो विस्मृतात्मगतिर्भवेत् ।
सावधानः क्वचित्तस्य परिचर्यां समाचरन् ॥ ५४ ॥
क्वचिद्दीनतरान् दृष्ट्वा तत्वं ब्रूते हरेः प्रियम् ।
क्वचिच्च विमुखान्दृष्ट्वा याति मौनं समाश्रितः ॥ ५५ ॥
क्वचिद्भागवतान्दृष्ट्वा हर्षादभ्यर्णमेति च ।
क्वचिद्विष्णुमयं विश्वं भावयन्वदते स्वयम् ॥ ५६ ॥
क्वचिद्भगवतो बिम्बं दृष्ट्वा नन्दति नृत्यति ।
क्वचिद् भागवतान्धर्माञ्छ्रुत्वा शोचति चिन्तया ॥ ५७ ॥
क्वचिद् भगवतो नामधामलीलादिसङ्गतः ।
प्रसन्नः शान्तधीरास्ते वक्ति भागवतागमम् ॥ ५८ ॥
एवं नानाविधावस्थासंभवत्यस्य दैहिकी ।
अन्तःकरणसंरोधो भगवत्येव जायते ॥ ५९ ॥

देहेन्द्रियान्तःकरणधर्मैश्च भगवन्मयैः ।
सर्वत्र सर्वदा शश्वद् भाति तत्वं तदेव तत् ॥ ६० ॥
एवं निरुद्धचित्तस्य महिम्नाऽथो मधुद्विषः ।
नोत्क्रान्तिरस्य भवति सिद्धिरत्रैव जायते ॥ ६१ ॥
एवं विरज्यमानस्य पराकाष्ठा निरूपिता ।
फलस्य साधनस्यापि रक्तस्याथो निबोधत ॥ ६२ ॥
यथाकथञ्चिद्यद्यैव जातश्रद्धो गुरुं भजेत् ।
गुरुणाऽनुग्रहीतोऽथ स्वीकृत्यैव प्रपन्नताम् ॥ ६३ ॥
प्रपन्नोऽथ व्रतैः शुद्धः कृत्वात्मानं निवेदितम् ।
निर्माय वैष्णवीं देवीं कलशं स्थाप्य राजतम् ॥ ६४ ॥
मण्डपादिस्वहोमान्तं सर्वाङ्गं स्याद् वृताद्वृतम् ।
कलशे देवमावाह्य परिवारेण संयुतम् ॥ ६५ ॥
मन्त्रात्तरौषधैस्तीर्थस्तौयैः संभृतकुम्भतः ।
विप्राशीर्वचनैः साकं मङ्गलं मङ्गलस्वनैः ॥ ६६ ॥
तन्मन्त्रैरभिषिञ्चेद्वै वैदिकैः क्रमसंभृतैः ।
पूर्णो मन्त्राभिषेकेण धौतदेहो नवांशुके ॥ ६७ ॥
पीताम्बरे परिदधेत् षण्मुद्रां तिलकान्वितां ।
तुलसीमालिकां पीतसुमनोमालिकामपि ॥ ६८ ॥
पीतानुलेपलिप्ताङ्गः सुगन्धैः कृतभूषणः ।
सन्मुखे प्रणतो दीनः समासीनो गुरोर्भवेत् ॥ ६९ ॥
कृतन्यासो धृतध्यानो गुरुश्चोपदिशेत् त्रिशः (न्मनुम्) ।
एवं धार्य प्रणम्यैनं जपन्मन्त्रं शतं ततः ॥ ७० ॥
स्वचित्तमर्पयेच्छक्त्या सर्वमर्द्धार्द्धमेव वा ।
समाप्य शेषकृत्यं च न्यासध्यानार्चनादिकम् ॥ ७१ ॥
अवधार्य महापूजां कुर्यात्सप्तदिनावधिम् ।
वर्णलक्षं जपेच्छुद्धो हविष्याशी जितेन्द्रियः ॥ ७२ ॥

ततः सहस्रादधिकं नित्यमिष्ट्वा हरिं जपेत् ।
वैष्णवेन स्वधर्मेण भव्यमूर्तिर्हरिप्रियः ।
लोकद्वयाप्तसर्वार्थकृतार्थः स्याच्छनैः शनैः ॥ ७३ ॥

इति श्रीशाण्डिल्यसंहितायां पञ्चमे भक्तिखण्डे दीक्षाविशेषनिरूपणं नामाष्टमोऽध्यायः ॥ ८ ॥



## नवमोऽध्यायः ।

अथ कामखण्डात् (?) । शाण्डिल्य उवाच—

अथ कामप्रयोगार्थं विशेषे च व्रते ब्रुवे ।
शुद्धे देशे शुभे काले व्रतं ग्राह्यं यथाविधि ॥ १ ॥
तीर्थक्षेत्रे नदीतीरे विष्णोरायतनेषु च ।
गोपालसन्निधौ गोष्ठे गोकुलेऽस्मिन् गिरावपि ॥ २ ॥
अरोगे सर्वसस्याढ्ये वत्सरे सुग्रहान्विते ।
उत्तरे शुक्लपक्षे च रवीन्दुगुरुवद्दिने ॥ ३ ॥
कार्तिके मार्गशीर्षे च माघे वा माधवेऽपि वा ।
द्वादशैकादशीपूर्णादिवसेषु स्थिरोदये ॥ ४ ॥
नक्षत्रेषु यथोक्तेषु प्रसन्नेषु ग्रहेषु च ।
वीक्ष्याथाऽकडहाचक्रं प्रारभेत गुरोर्व्रतम् ॥ ५ ॥
तत्र तद्दिनतः पूर्वं सर्वप्रायश्चित्तिं चरेत् ।
व्रतैः प्रतिकृतैर्वापि शक्त्या वा स्वधनेन च ॥ ६ ॥
शुद्धः शुभदिनं वीक्ष्य भूमिं शुद्धां च शोधयेत् ।
गुरोरनुमतस्तत्र कुर्याद्वास्तुविधिं यथा ॥ ७ ॥

कृत्वा समतलां भूमिं तत्र कृत्वा सुमण्डलम् ।
त्रिपञ्चाशत्सुराः पूज्या ब्रह्माद्या मध्यमण्डलात् ॥ ८ ॥
पयोभक्तचरुद्रव्यैर्बलिर्देयो यथोदितः ।
भूयो भूमिं समाकृत्य लोष्ठलोमादिवर्जिताम् ॥ ९ ॥
नवभिः सप्तभिः पञ्चभिः करैः परिणाहतः ।
चतुर्द्वारसमोपेतं तोरणैर्यूपमण्डितम् ॥ १० ॥
दर्भादिपरिवीतं च शुद्धकाष्ठैः सुमण्डपम् ।
तत्र कुर्यात्पञ्चचयि मण्डलं प्राक्परायतम् ॥ ११ ॥
यत्र देवा मण्डयन्ति पान्ति भक्तं स्वशक्तिभिः ।
तन्मण्डपमितिख्यातं कार्यं वै शुभकर्मणि ॥ १२ ॥
चतुर्विंशाङ्गुलोच्छ्राया पालिका सुमनोहरा ।
बीजवापः प्रकर्तव्यस्तत्र सप्ताहतः पुरा ॥ १३ ॥
शालीकङ्गुश्च श्यामाकतिलमुद्गाश्च सर्षपाः ।
आढकी चापि निष्पावा वपेत्तान् शोध्य मन्त्रतः ॥ १४ ॥
स्वस्वद्रव्यैश्च यजनं कारयेद्ग्रहमण्डले ।
विष्णुशङ्करब्रह्मादियक्षपितृविहायसः ॥ १५ ॥
दिक्सिद्धे मण्डले तत्रोदीच्यामेकं हविर्भुजः ।
कुण्डलं त्रिमेखलं योनिनाभिपद्माद्यलङ्कृतम् ॥ १६ ॥
मण्डपस्थचतुस्तम्भमध्ये वेदी मनोहरा ।
तस्यां तु सर्वतोभद्रचक्रं कार्यं सुरञ्जितम् ॥ १७ ॥
इत्थं संभृतसम्भारो दीक्षाशुद्धांश्च ऋत्विजः ।
संपाद्य गुरुणा ज्ञप्तः स्वस्तिकर्म समारभेत् ॥ १८ ॥
दीक्षायाः प्रथमे घस्रे मङ्गलैर्गीतवाद्यकैः ।
सोपाध्यायो गुरोर्गेहं गत्वा स वृणुयाच्च तम् ॥ १९ ॥
गुरुः शिष्येण विप्रैश्च वृतो मण्डपमाव्रजेत् ।
द्वारपूजां विधायास्य भूसंस्कारं चरेदथ ॥ २० ॥

६

संशोध्य पञ्चगन्धेन श्रीखण्डाद्यैश्च धूपयेत् ।
विकीर्य सर्षपादीनि संमार्ज्यमभिसंनयेत् ॥ २१ ॥
पुण्याहवाचनं तत्र ब्राह्मणैर्वेदपारगैः ।
वास्तुपूजां ततः कुर्यात् क्षेत्राधिपतयश्च ये ॥ २२ ॥
न्यस्यात्मा मूलमन्त्रेण गुरुं गणपतिं यजेत् ।
पीठन्यासं निजेशस्य कुर्याद्वै सर्वभद्रके ॥ २३ ॥
कर्णिकासु न्यसेच्छाली मन्त्रैःकूर्चाक्षता अपि ।
हैमं तु कलशं तत्र तोरणोक्तकषायकैः ॥ २४ ॥
संपूर्यावाहयेत्तत्र कला मूलार्णसम्भृताः ।
देवं च पूजयेत्तत्र नैवेद्यान्तं यथाविधि ॥ २५ ॥
विधायानीय सद्वह्निं निधायाभ्यर्च्य देशिकः ।
लक्ष्ययोनौ हरेर्बीजं कुण्डे सम्भावयन्न्यसेत् ॥ २६ ॥
क्रव्यादांशविहीनाग्निं कुशैः प्रज्वालयेदथ ।
प्रज्वलन्त समुत्थाय प्रोपस्थयोपसम्विशेत् ॥ २७ ॥
वह्निन्यासं ततः कुर्यात्पूजनं जातवेदसः ।
गर्भादानादिसंस्कारा नामाहुत्या भवन्ति ते ॥ २८ ॥
जिह्वाङ्गमूर्तिमन्त्रैश्च सिद्धं कृत्वा विभावसुम् ।
चरुं च श्रपयेच्छुद्धं ताम्रे वा मृन्मयेऽपि वा ॥ २९ ॥
अभिघार्य त्रिधा भज्य आनीय कुशविष्टरे ।
कुण्डे स्वदेवं सम्पूज्य गन्धपुष्पाक्षतादिभिः ॥ ३० ॥
देवस्याग्नेर्मुखस्यैकां कृत्वा शुद्धास्वभागतः ।
एकादशाहुतीर्हुत्वा षडङ्गावरणानि च ॥ ३१ ॥
ध्रुवामध्यमभागेन इम मन्त्रेण होमयेत् ।
अवशिष्टाष्टभागेन बलिं दद्याद्यथाविधि ॥ ३२ ॥
सर्वतोभद्रराशीशकुजादीनां पृथक् पृथक् ।
ऋक्षाणामपि चाङ्गानामुत्तरापोशनं ततः ॥ ३३ ॥

कलशस्य निजेशस्य ततो नीराजनादिकम् ।
ईशानावकरे पूर्णं करकं मण्डितं न्यसेत् ॥ ३४ ॥
तत्रास्त्रदेवतामिष्ट्वां स्वरक्षार्थं प्रदक्षिणम् ।
धारां सम्पातयेदस्य मण्डपस्य समन्ततः ॥ ३५ ॥
श्रीहरेः शासनाद्देवा सशिष्यं मामवन्तु ते ।
पुनस्तं करकं तत्र विन्यस्याच्यर्य देवताम् ॥ ३६ ॥
चरोस्तृतीयांशमथो सशिष्योऽभ्येति चात्ति वा ।
ततस्त्वाचमनं कार्यं शुद्धो विष्टरसंस्थितौ ॥ ३७ ॥
षडङ्गन्यासयोगेन शिष्यं चाभिमृषेद्गुरुः ।
ततोऽभिमन्त्रितं दत्तकाष्ठं संस्कारयेदिमम् ॥ ३८ ॥
ततोऽस्य मूलमन्त्रेण शिखां बध्वा कुशास्तरे ।
स्वापयेब्दोधितं शिष्यं गुरुश्चापि तथा भवेत् ॥ ३९ ॥

इति श्रीशाण्डिल्यसंहितायां पञ्चमे भक्तिखण्डे मखपूर्वाङ्गनिरूपणं नाम नवमोध्यायः ॥ ९ ॥

—o—

## दशमोऽध्यायः ।

शाण्डिल्य उवाच—

ब्राह्मे मुहूर्ते चोत्थाय दैहिकं सन्निवर्त्य च ।
मूलाभिमन्त्रितं दत्तं काष्ठं शिष्याय देशिकः ॥ १ ॥
कारयेच्च स्वयं कुर्यात्तथा पूर्वाह्णिकी क्रिया ।
भूषितोऽथ प्रणम्यैवं गुरोः पार्श्वेऽथ संविशेत् ॥ २ ॥
गुरुर्निजेष्टं सम्पूज्य मन्त्रद्रव्यैर्हुनेत्ततः ।
अष्टोत्तरशतं जप्त्वा अष्टोत्तरसहस्रकम् ॥ ३ ॥

ततो व्यङ्गाङ्गतोच्छित्यै किञ्चित्सङ्कल्पयेद्धिया ।
पञ्चगव्यं प्राशयेत्तं दिव्यदृष्ट्यावलोकयेत् ॥ ४ ॥
तस्य हृत्पद्मतो जीवं योगेनात्मनि योजयेत् ।
पिण्डं संशोधयेदस्य मन्त्रमूलकलाणुभिः ॥ ५ ॥
निवृत्तिं च प्रतिष्ठां च विद्यां शान्तिं तथा पराम् ।
शान्त्यतीतां च पदयोः कलास्तस्य गुरुर्न्यसेत् ॥ ६ ॥
स्वाधिष्ठानेऽस्य जीवासुधीमतां (?) श्रोत्रत्वग्दृशः ।
जिह्वाघ्राणे च वाक्पाणिपादपायुश्रुतीन्द्रियम् ॥ ७ ॥
भूतपञ्चकमेवं हि मात्रापञ्चकमेव च ।
हृदयाद्यं सोमसूर्याऽग्निमयं तेजस्त्रयं ततः ॥ ८ ॥
वासुदेवं सङ्कर्षणं प्रद्युम्नं चानिरुद्धकम् ।
द्वात्रिंशत्तत्वरूपं च तत्वाध्वानं विभावयेत् ॥ ९ ॥
मणिपूरे स्मरेदस्य अतलादिचतुर्दश ।
लोकाध्वानं न्यसेन्मन्त्री सत्यान्तं भुवनत्रयम् ॥ १० ॥
अनाहते अकारादिक्षकारान्तां तु मातृकाम् ।
वर्णाध्वानमिदं दिव्यं देशिकोऽत्र धिया न्यसेत् ॥ ११ ॥
सहस्रारे पुनस्तस्य मन्त्रवर्णां स्वदेवताम् ।
मन्त्राध्वानं न्यसेदस्य तत्र दिव्यांश्च भावयेत् ॥ १२ ॥
इत्थं विचिन्त्याध्वषट्कं करेणाभिमृशन् हृदि ।
तिलाज्याहुतिभिः षट्कं ततो नाम्नाभिशोधयेत् ॥ १३ ॥
विलापयेत्परं तस्मिन्मन्त्राध्वानावधिः पुनः ।
मन्त्राध्वानमयं तत्वं तत्स्वस्थानेषु विन्यसेत् ॥ १४ ॥
एवं मन्त्रमये देहे दिव्यदृष्ट्या स्वयोगतः ।
स्वस्थितं तस्य चैतन्यं ब्रह्मरन्ध्रे निवेशयेत् ॥ १५ ॥
साङ्गावरणतो देवमाज्याहुत्यापि होमयेत् ।
अग्न्यादिमहदन्तं च चतुर्भिरपि तर्पयेत् ॥ १६ ॥

ततो हुनेदिमं पूर्वं प्रणवुध्यादिभिर्मया।
यत्कृतं तत्तु सकलं भवे ब्रह्मार्पणं मम ॥ १७ ॥
संपूर्णसाङ्गतासिध्यै हुत्वा वै देवबीजतः।
प्रणवेन च साङ्गं मे कुरु स्वाहेति संहुनेत् ॥ १८ ॥
ततोऽग्नेः प्रार्थनं कार्यं विष्णोरपि मदात्मनः।
ततः पूर्णाहुतिं कुर्याद्वह्निमुद्वासयेदथ ॥ १६ ॥
पूर्णपात्रं विसृज्याथ कलशे हरिमर्चयेत्।
नेत्रबन्धविधायास्य नयेद्द दैवतसन्निधौ ॥ २० ॥
सुमनोऽञ्जलिनापूर्य दापयेद्धरिपादयोः।
नेत्रबन्धमपाकृत्य पाठयेत्सुगुरोः स्तुतिः ॥ २१ ॥
ततो मातृमुखान्न्यासान्मन्त्रस्यास्य तनौ न्यसेत्।
स्नानमण्डपमानीय पञ्चवाद्यैर्मनोहरैः ॥ २२ ॥
पूर्वास्यं सङ्कलीकृत्याभ्यर्च्य विप्राशिषां गणैः।
उदङ्मुखं चाभिषिञ्चन्मन्त्रैः कलशसंभृतैः ॥ २३ ॥
अवशिष्टजलेनैनं गुरुराचामयेत्ततः।
वाससी विमले तस्मै दत्वा मौनमुपाश्रितः ॥ २४ ॥
देवभावं समासाद्य उपविष्टं कुशास्तरे।
शिष्यस्य दक्षिणे कर्णे वदेन्मन्त्रं त्रिशो (?) गुरुः ॥ २५ ॥
शिष्योऽपि देवमायातं मन्त्रद्वारेण भावयेत्।
ततः सद्यो जपेन्मन्त्रं तेषामैक्यं धिया गृणन् ॥ २६ ॥
ततः समर्प्य सर्वस्वं तदाधीनो भवेत्सदा।
तज्जन्मदिवसे चाथ तदीयानां च जन्मनः ॥ २७ ॥
मन्त्रप्राप्तिदिने दिव्यदिनानामुत्सवं चरेत्।
गीतैर्वाद्यैश्च नृत्यैश्च महापूजोपचारकैः ॥ २८ ॥
एवं लब्धमहामन्त्रैर्विप्राम्बुतुलसीदलैः।
कुर्यात्सप्तदिने तत्र महापूजां मिताशनः ॥ २६ ॥

नित्यार्चनं ततः कुर्यात्तथा नैमित्तिकार्चनम् ।
पुरश्चर्याविधानेन ततः सिद्धमनुर्भवेत् ॥ ३० ॥
हिंसका लिङ्गिनो व्रात्या मद्यमांसभुजोऽपि ये ।
न संसर्गं भजेत्तेषां निजधर्मपरो व्रती ॥ ३१ ॥
कामस्य चानुरूपेण जपन्कुर्वन्स्मरेद्धरिम् ।
तत्तत्कार्यपरं ध्यात्वा हुनेद्द्रव्यैर्यथाविधैः ॥ ३२ ॥
वैदिकं तान्त्रिकं स्मार्तं मिश्रं पौराणिकं तथा ।
भक्तिशास्त्रोदितं चापि षड्विधं नित्यपूजनम् ॥ ३३ ॥
वैदिकं पौरुषैर्मन्त्रैस्तथा नारायणादिभिः ।
प्रणवेनापि मूलार्णैर्यतिनो ब्राह्मणस्य च ॥ ३४ ॥
वैखानसं पञ्चरात्रं ब्रह्मोक्तं नारदोदितम् ।
तान्त्रिकं तु द्विजातीनां दीक्षितानां प्रशस्यते ॥ ३५ ॥
स्मार्तं बौधायनप्रोक्तं मिश्रं वेदेन मिश्रितम् ।
पौराणिकैर्नामभिश्च भवेत्तच्छूद्रधर्मिणः ॥ ३६ ॥
भक्तैः परम्पराचीर्णं प्रेमैकविधिगोचरम् ।
अहर्निशं भवति यत्तद्भक्तार्चनमिष्यते ॥ ३७ ॥
भक्तिशास्त्रोपदेशस्तु पुरा प्रोक्तो यथाविधि ।
आधारान्तं स्वगृह्योक्तं वैदिकं तत्र जायते ॥ ३८ ॥
तान्त्रिकं तान्त्रिकैरेव साधनैरभिषेचनैः
पौराणिकोपदेशैश्च देशे काले शुभे मते ॥ ३९ ॥
चन्द्रसूर्योपरागे च गङ्गायमुनयोस्तटे ।
श्रद्धायाश्च गुरोश्चापि भवेत्तद्धि समागमे ॥ ४० ॥

इति श्रीशाण्डिल्यसंहितायां पञ्चमे भक्तिखण्डे दीक्षाप्राप्तिनिरूपणं नाम दशमोऽध्यायः ॥ १० ॥

——:o:——

## एकादशोऽध्यायः ।

शाण्डिल्य उवाच—

पाश्चात्ययामे चोत्थाय निशायाः शुद्धधीः शुचिः ।
स्वान्ते विचिन्त्य चात्मेशं गोपिकेशं गवां गणे ॥ १ ॥
विचिन्त्यात्मकृतिं पश्येद् देवद्विजगुरून् शुचीन् ।
देहयात्रां च संकल्प्य भूमिं स्तुत्वा शुचिर्भवेत् ॥ २ ॥
सुखासने स्वस्तिकेन समासीनोऽथ चाचमेत् ।
प्राणान्मूलार्णतो यच्छन् मूलाधारं नियम्य च ॥ ३ ॥
पिण्डे वायुं प्रपूर्याथ जीवज्योतिः सुवर्धयेत् ।
हृत्पुण्डरीकं सम्बोध्य शिरः पद्मं च भासयेत् ॥ ४ ॥
हृदयाब्जे तु यमुनापरीतं गोकुलं स्मरेत् ।
किं वा वृन्दावनं ध्यायेत् परमानन्दमन्दिरम् ॥ ५ ॥
सर्वर्तुकुसुमोपेतं लसत्कल्पद्रुमाश्रितम् ।
नानामण्डलसौधालिजलाशयमनोहरम् ॥ ६ ॥
मुनिरूपविहङ्गानां चित्रराजीवकूजितम् ।
मातृभावं गताभिर्यद्गोभिश्चारुभिरञ्जितम् ॥ ७ ॥
गोपैः स्मृतिपुराणाद्यैः सर्वाभरणभूषितैः ।
श्रुतिरूपभजस्त्रीभिर्नानाभावैः समर्चितम् ॥ ८ ॥
तत्र कल्पद्रुमस्याधो रत्नसिंहासने हरिम् ।
अनौपम्यं वेणुधरं फुल्लेन्दीवरसुन्दरम् ॥ ९ ॥
त्रिभङ्गललितं ध्यायेत्करुणावरुणालयम् ।
तत्र पीताम्बरं ध्यायेद् गुरुं भूषाङ्गभूषितम् ॥ १० ॥
प्रसन्नं भक्तिशास्त्रं यत्कृपया बोधयन् निजान् ।
तदीयचरणाम्भोजरजःसंक्लृप्तमात्मनः ॥ ११ ॥
पिण्डं विभावयेत्प्राज्ञो योग्यं भजनकर्मणि ।
ततो मानसिकं कार्यं गन्धाद्यैस्तत्समर्चनम् ॥ १२ ॥

ततः स्तुत्वा प्रणम्यैनं क्षमाप्यावर्तयेन्मनुम् ।
स्तुवेन्नमेद्वा मनसा पूजयेज्जगदीश्वरम् ॥ १३ ॥
ततो नित्यजपं जीवः कल्पयेत्परमात्मने ।
अणीयसे हृदम्भोजे हंसरूपेण तिष्ठते ॥ १४ ॥
सोऽहं सोऽहं जपन् जीवो मूलाध्यासेन बाध्यते ।
देशिकास्मै श्रुतिः शास्ति दासोऽहं तेन भावयेत् ॥ १५ ॥
इत्थंभावयतस्तस्य सखा सख्यं प्रयच्छति ।
हंसः सोऽहमितिध्यानं तदा तस्य भविष्यति ॥ १६ ॥
ततोऽर्चायां सुतान् शिष्यान् भृत्यान्वा योजयेद्गृहे ।
सम्मार्जनोपलेपाद्यैः कुर्युः स्नाता सुसम्भृतिम् ॥ १७ ॥
दन्तकाष्ठं ततः कार्यं निषेधेऽप्याम्रजम्बुकैः ।
गोमयं मृत्कुशान् धृत्वा द्विवासाः स्नानमाचरेत् ॥ १८ ॥
स्वयं सशिष्यस्तीर्थादौ गत्वाथ पेटकं न्यसेत् ।
ततो मूत्रपुरीषादि शौचं शास्त्रोक्तमाचरेत् ॥ १९ ॥
कृतध्यानार्चनजपं निवेद्य हरये ततः ।
मलस्नानं बहिः कृत्वा अवगाह्य ततो जलम् ॥ २० ॥
देशकालौ समुच्चार्य कुशपाणिर्यथाविधि ।
कृत्वैवं वैदिकं स्नानं मन्त्रमेतमुदीरयेत् ॥ २१ ॥
श्रीमन्मुकुन्द यज्जाते गङ्गे त्रिपथगामिनि ।
पुनीहि मामम्भसा त्वं संसारासक्तमानसम् ॥ २२ ॥
कलिन्दगिरिसंभूते श्रीमुकुन्दैकवल्लभे ।
देहि मां दास्यभावेन सेवनं मुरवैरिणः ॥ २३ ॥
देहि मे योग्यतां देवि परिचर्याविधौ हरेः ।
तुर्यप्रिये जगद्वन्द्ये गोविन्दरतिवर्द्धिनि ॥ २४ ॥
कृष्णे तरणिजे देवि श्रीवृन्दावनभूषणे ।
गोपगोपिगवां सेव्ये शुद्धोदधिकृतालये ॥ २५ ॥

नमो भगवति तुभ्यं नमो रासविलासिनि ।
नमो वेदमयि मातर्भजनानन्दलब्धये ॥ २६ ॥
इत्येवं बहुधा स्तुत्वा निमज्योन्मज्य वैष्णवः ।
जलदेवीं समावाह्य दिव्यवैकुण्ठनिम्नगाम् ॥ २७ ॥
श्रीगोपालं ततो भक्तोऽभ्यर्च्य मूलार्णसंभृतैः ।
आचम्याथो सुधारूपैस्तर्पयेद्यमुनाजलैः ॥ २८ ॥
श्रीगोपालं तर्पयामि एवं श्रीगोकुलेश्वरम् ।
गोविन्दं गोपिकानाथं यशोदोत्सङ्गलालितम् ॥ २९ ॥
श्रीनन्दनन्दनं देवं श्रीनाथं श्रीहरिं प्रभुम् ।
पुरुषोत्तममीशानं श्रीकृष्णमितिनामभिः ॥ ३० ॥
श्रीराधिकां स्वात्मरूपां नित्यसिद्धां व्रजेश्वरीम् ।
पूर्णानन्दप्रकाशात्मरूपां वामाङ्गभागिनीम् ॥ ३१ ॥
गोपिकाश्चापि गावश्च वत्सा गोपाश्च वैष्णवाः ।
परिवारं व्रजस्थानां लीलाधामानि तर्पयेत् ॥ ३२ ॥
ततस्तीरं समासाद्य अङ्गं सम्माज्र्य चाग्रतः ।
शुद्धे शुक्लाम्बरे दध्यात् कौशेये वापि पीतके ॥ ३३ ॥
ततस्तीर्थरजो लिप्त्वा पीत्वा तीर्थपयस्ततः ।
स्तीर्थमालां ततो धृत्वा स्वयं तीर्थमयो भवेत् ॥ ३४ ॥
ततः प्रक्षालयेत्पाणी आचम्यासनसंस्थितः ।
कुङ्कमस्योर्ध्वपुण्ड्राणि द्वादशाङ्गेषु धारयेत् ॥ ३५ ॥
नासिकामूलमाश्रित्य दण्डाकारं सुशोभनम् ।
सान्तरालं दधेद्भालं केशवाय नमोऽस्त्विति ॥ ३६ ॥
उदरे कुमुदाकारं नमो नारायणाय च ।
हृदये कमलाकारं माधवाय नमोऽस्त्विति ॥ ३७ ॥
शङ्खाकृतिं कण्ठकूपे गोविन्दाय नमोऽस्त्विति ।
कट्यां तु दक्षिणे विष्णुर्मत्स्याकारो व्यवस्थितः ॥ ३८ ॥

दक्षिणेऽथ भुजे वंशत्रये स्यान्मधुसूदनः।
दीपवर्तिसमे दक्षकर्णप्रान्ते त्रिविक्रमः॥ ३९॥
वामकक्ष्यां वामनाय नमो वामभुजे तथा।
श्रीधराय नमः कर्णे हृषीकेशाय वै नमः॥ ४०॥
कूर्माकारे पृष्ठदेशे पद्मनाभाय वै नमः।
दामोदरं ककुद्देशे गदाकारेऽभिधारयेत्॥ ४१॥
वासुदेवं निराकारे मूर्ध्नि भक्तोऽभिधारयेत्।
सङ्कर्षणादिभिः कृष्णे एवं नामभिरर्पयेत्॥ ४२॥
केचिच्छ्रियं वामवक्षोमण्डनां धारयन्ति हि।
चरणाम्बुमृदः पुण्ड्रं विरक्तस्य सदा भवेत्॥ ४३॥
आदर्शे वा जले वीक्ष्य पुण्ड्राणां धारणं भवेत्।
गोपीचन्दनमृत्स्नायास्ततो मुद्राभिधारणम्॥ ४४॥
ललाटे चक्रमेकं स्यान्मन्त्रमुद्रास्त्वनेकशः।
दक्षिणे बाहुमूले तु न्यसेच्चक्रचतुष्टयम्॥ ४५॥
वामबाहौ तु चतुरः शङ्खानां चापि धारणम्।
हृन्मध्ये पद्ममेकं तु गदाः स्युरेतदन्तरे॥ ४६॥
शङ्खं तु कण्ठकूपे च ऊर्द्धं नाम समुद्रिकाः।
शेषेषु पुण्ड्रदेशेषु चक्रमेकैकमर्पयेत्॥ ४७॥
मन्त्रमुद्राश्च सर्वत्र माया (अथो) भाग्यं दधद्द्विजः।
पञ्चाङ्गं क्षत्रिये पुण्ड्रं चतुरङ्गं विशो मतम्॥ ४८॥
स्त्रीशूद्राणां सदैकाङ्गं शिरोंसगलहृत्सु वा।
सम्प्रदायानुसारेण पुण्ड्रं मुद्रास्त्वनेकधा॥ ४९॥
निजेष्टदेवमुद्रासौ मन्त्रमुद्रा ह्युदाहृता।
स्वधर्ममूलमुद्रा तु नाममुद्रा तु सम्मता॥ ५०॥
दशाक्षरमयी मुद्रा मन्त्रमुद्रा प्रकीर्तिता।
अष्टाक्षरमयी मुद्रा नाममुद्रा तु सम्मता॥ ५१॥

अधृत्वा तिलकं स्वाङ्गे मुद्राषट्कं तथोपरि ।
यः करोति हरेरर्चां जपं वा तस्य निष्फलम् ॥ ५२ ॥
यो न दद्याद् द्विजो मोहात्पुण्ड्रं वै पुण्यकर्मणि ।
तस्य क्रिया भवेद् व्यर्था रौरवं सोऽधिगच्छति ॥ ५३ ॥
स्नानं सन्ध्या जपो होमः स्वाध्यायः पैतृकं तथा ।
देवकार्य्यं ब्राह्मणानामूर्ध्वपुण्ड्रेण चेष्यते ॥ ५४ ॥
ऊर्ध्वपुण्ड्रधरः शुद्धः सत्क्रियां कुरुते तु यः ।
सा क्रिया वैष्णवी प्रोक्ता सर्वपापापनुत्तये ॥ ५५ ॥
तुलसीकाष्ठजा माला ऊर्ध्वपुण्ड्रं द्विजन्मनाम् ।
भक्तिज्ञानविरागाय तथा सत्कर्मणो मतम् ॥ ५६ ॥
विप्राणां नित्यमेतद्धि प्रधानाङ्गं सुकर्मणाम् ।
ऊर्ध्वपुण्ड्रं च तुलसीकाष्ठमालातिपावनी ॥ ५७ ॥
वैदिकं तान्त्रिकं स्मार्तं पौराणं वैष्णवं तथा ।
ऊर्ध्वपुण्ड्रं चोर्ध्वगतिं निषेधन्ति तथेतरम् ॥ ५८ ॥
हरिपादाम्बुजा मुद्रा तुलसीकाष्ठमालिका ।
ऊर्ध्वपुण्ड्रं द्विजातिनां स्नानसन्ध्यादिवच्छुभम् ॥ ५९ ॥
द्वादशाङ्गोर्ध्वतिलकास्तुलसीकाष्ठमण्डिताः ।
तीर्थमृद्भूसराङ्गाश्च विरक्ता वैष्णवोत्तमाः ॥ ६० ॥
नास्तिक्यादथवालस्याद्वचनान्तरविभ्रमात् ।
न धारयन्त्यूर्ध्वपुण्ड्रं मालां ते हरिविद्विषः ॥ ६१ ॥
कर्मज्ञानाङ्गभूतानि निषेधवचनानि चेत् ।
कर्मज्ञानाङ्गयुग्भक्तेर्न स्पृशन्ति दिशोऽपि वै ॥ ६२ ॥
विहाय वैष्णवं धर्मं संसारं तर्तुमिच्छति ।
त्यक्तनौर्वारिधेः पारं बाहुभ्यामाप्तुमिच्छति ॥ ६३ ॥
एष निष्कण्टकः पन्थाः श्रीपतेश्चरणाश्रितः ।
अनेन विश्वगहनमतिवर्त्याभिमोदते ॥ ६४ ॥

कुशाजिनासने स्थित्वा पात्राण्यासाद्य शोधयेत् ।
पञ्चपात्राणि दर्भाद्याचमनीयाम्बुसंग्रहैः ॥ ६५ ॥
पवित्रदर्भपाणिः सन्द्विवासाः प्राङ्मुखो द्विजः ।
कुर्यात्स वैदिकीं सन्ध्यां तर्पणं वापि सम्भवात् ॥ ६६ ॥
ततस्तु कलशं शुद्धं वस्त्रपूताम्बुसम्भृतम् ।
तुलसीकुसुमैः साकमादाय गृहमाव्रजेत् ॥ ६७ ॥

इति श्रीशाण्डिल्यसंहितायां पञ्चमे भक्तिखण्डे स्नानतिलकमुद्राविधिनिरूपणं नाम एकादशोऽध्यायः ।

---

## द्वादशोऽध्यायः

शाण्डिल्य उवाच—

निधाय कलशं स्थाने पादशौचं विधाय च ।
अपवित्रः पवित्रो वेत्यपि सम्प्रोक्षयेत्तनुम् ॥ १ ॥
मन्दिरद्वारमागत्य प्रणम्य हरये मुदा ।
शङ्खघण्टादिवाद्येन श्लोकयेत्तं कृताञ्जलिः ॥ २ ॥
भो भो जगन्मङ्गलमङ्गल प्रभो ।
भो भो नवेन्दीवरसुन्दरद्युते ॥
भो भो समस्तैर्निगमागमैः स्तुत ।
भो भो रमालालितपादपल्लव ॥ ३ ॥
विबुध्य भो भक्तजनानुकम्पया ।
व्रजेन्दिरां पश्य रमाभिराम ॥
प्रोत्फुल्लराजीवविकाशभासुरां ।
मिलन्मिलिन्दालिनिचोलसंवृताम् ॥ ४ ॥

द्विजा द्विजाः किं भगवन्भवतस्तुतिम् ।
कुर्वन्ति चाव्यक्तपदैर्मनोहरैः ॥
असौ दिदृक्षुस्तरणिस्त्रयीमयः ।
समेति वृन्दावनगोचरं हरिम् ॥ ५ ॥
गोबालकैस्त्वामभिगोपबालकाः ।
समाह्वयन्ते कृतकौतुकाः स्वयम् ॥
यशोदयेत्थं प्रतिबोधितः प्रभो ।
निजाननुगृह्य तथैव जागृहि ॥ ६ ॥
एवं प्रबोध्य श्रीकान्तं जगदानन्दसुन्दरम् ।
प्रविशेन्मन्दिरे विष्णोर्मार्ज्जनं लेपनं चरेत् ॥ ७ ॥
पात्राणि क्षालयेत्तस्य वस्त्रपीतासनादिभिः ।
पाद्यार्घ्याचमनीयेन्दुशकलैर्गन्धभूषणैः ॥ ८ ॥
नैवेद्येन समभ्यर्च्य कुर्यान्नीराजनोत्सवम् ।
गुरोश्च पूजनं दद्ये पीठे तत्पादुकाद्वये ॥ ९ ॥
शृङ्गारपीठे यन्त्रार्चाकुर्याद्वामस्थितो हरेः ।
गुरुपीठाग्रवामाङ्गे प्रभोः शृङ्गारमण्डपम् ॥ १० ॥
शोध्यं मालयाम्बुभृङ्गारैः पृथक्पात्रचतुष्टयम् ।
कुर्याद्वा त्रिस्त्रिधैकैकं गुरोरस्यानुवर्त्तिनाम् ॥ ११ ॥
तत्र पीतं तु संस्थाप्य कलशं चापि दक्षिणे ।
गन्धं पुष्पं च धूपं च दीपमालार्त्तिकादिकम् ॥ १२ ॥
तथा गुरोः पात्रगणं गुरुपीठस्य दक्षिणे ।
देवपात्राणि चैवं हि कलशात्पृथुलानि च ॥ १३ ॥
तेषु पूजनसद्द्रव्यं क्षालितं प्रोक्षितं न्यसेत् ।
नैवेद्यमिष्टदेवस्य पक्वं दौग्धं फलं तथा ॥ १४ ॥
पाद्यार्घ्याचमनीयाम्बुमधुपर्कादिकत्रयम् ।
सौवर्णै राजतैस्ताम्रैः पात्रैर्वामे त्रिभिस्त्रिभिः ॥ १५ ॥

स्नानपीठं दक्षिणे च सपात्रं विन्यसेद्विभोः ।
स्नानाम्बुकलशं शङ्खं पात्राण्युभयतोऽस्य तु ॥ १६ ॥
वेदगृहे स्वपात्राणि देवागारे हरेर्गुरोः ।
शय्यागारे प्रियाणां च दक्षिणादिक्रमादिह ॥ १७ ॥
प्रज्वाल्य दीपमुत्थाय स्थित्वा स्वीयासने द्विजः ।
मूलमन्त्राच्छिखां बध्वा करौ प्रक्षाल्य चाचमेत् ॥ १८ ॥
केशवाय नमः स्वाहा तथा नारायणाय च ।
माधवायेति चाचम्य गोविन्दाय करौ मृजेत् ॥ १६ ॥
शेषैः खानि तथाङ्गानि शोधयेद्द्विष्णुतत्परः ।
अनन्तं योगशक्तिं च समभ्यर्चारभेदथ ॥ २० ॥
गुरुं चैव नमस्कृत्य ध्यात्वाभ्यर्चां रभेत वा ।
एवमाचम्य मूलेन प्राणायामं त्रिभिश्चरेत् ॥ २१ ॥
मूलमन्त्रं धिया ध्यायेत्तस्मिन् श्रीनन्दनन्दनम् ।
किशोरं श्यामलं कान्तं पीतवासोविभूषितम् ॥ २२ ॥
पद्मासने समासीनं पद्माद्यर्चितपद्युगम् ।
सर्वश्रुतिस्तुतं देवैर्मुनिभिश्चापि सेवितम् ॥ २३ ॥
स्वस्तिकासनमासीनः पूरकुम्भकरेचकैः ।
निर्धूमेन सधूमेन पिण्डं संशोध्य यत्नतः ॥ २४ ॥
संहारक्रमतो दग्ध्वा सङ्कर्षणमुखांशुतः ।
आकाशादि पुनर्ध्यायेदुत्पन्नं मूलवर्त्मना ॥ २५ ॥
एवं पिण्डे योगबलाज्जातेऽतिविमले हरेः ।
एवं जीवकलां ध्यायेद्दासभूतां हरेः प्रियाम् ॥ २६ ॥
एकादशेन्द्रियैर्दीप्तां प्रभया व्याप्य तिष्ठति ।
तां संयोज्य हरेः पादपद्मयोः शुद्धिमागताम् ॥ २७ ॥
शुद्धस्फटिकवर्णस्य गुरोः पादाब्जयोर्न्यसेत् ।
सम्भाव्य शासनां तस्य सहस्रारां निवर्त्य च ॥ २८ ॥

सर्वेन्द्रियैः सह प्राणैः शुद्धां निर्वासयेदथ।
आचम्य पीतपूजां च न्यासं कुर्याद्यथाविधि ॥ २९ ॥
ध्यायेत्सङ्कर्षणं देवं सहस्रशिरसं मितम्।
नीलाम्बरं हलधरमेककुण्डलसुन्दरम् ॥ ३० ॥
नागकन्यासहस्रैश्च सनकाद्यैः प्रपूजितम्।
तस्यैव सितदण्ष्ट्राग्रे ध्यायेदिन्दीवराकृतिम् ॥ ३१ ॥
धरणीं पीतवसनां सर्वाभरणभूषिताम्।
वराभयोद्यतकरां समासीनां शुचिस्मिताम् ॥ ३२ ॥
माथुरं मण्डलं ध्यायेत्तत्र वृन्दावनस्थलीम्।
दिव्यरूपमनोहारिकालिन्दीकुञ्जशोभिताम् ॥ ३३ ॥
नमः सङ्कर्षणायेति वराहायेति मन्त्रतः।
पृथ्वित्वयेति मन्त्रेण आसनं परिकल्पयेत् ॥ ३४ ॥
प्रक्षाल्याचम्य शुद्धोऽसौ न्यासषट्कं ततश्चरेत्।
मातृकां विन्यसेत्पूर्वं षष्ठब्रह्मतनूं पराम् ॥ ३५ ॥
नारायणो ऋषिस्तस्या गायत्रीच्छन्द ईरितः।
लक्ष्मीनारायणो देवोऽधिकृत्यै विनियोजनम् ॥ ३६ ॥
मन्त्रपदैः स्वरैर्वर्गैर्हृदयाद्यङ्गषण्मते।
अङ्गुष्ठादिक्रमेणापि षट्धानुकृत्य चापरान् ॥ ३७ ॥
विद्याब्जकाचकुम्भाब्ज (?) गदाशङ्खसुदर्शनैः।
शब्दार्थाकारसत्कान्तं लक्ष्मीनारायणं स्मरेत् ॥ ३८ ॥
नारायणमहामन्त्रन्यासं कुर्यात्पुरोदितम्।
एवं न्यस्ततनुर्मन्त्री साक्षादक्षरतां गतः ॥ ३९ ॥
आचक्राय विचक्राय सुचक्राय ततः परम्।
त्रैलोक्यरक्षाचक्राय असुरान्तकराय च ॥ ४० ॥
चक्रपञ्चकतो मन्त्री पञ्चाङ्गान्यस्य रक्षयेत्।
भवेत्तेजोमयो मन्त्री चक्रपञ्चकरक्षितः ॥ ४१ ॥

श्रीमन्मुकुन्देत्यङ्गुष्ठे तर्जन्यां चरणाविति ।
मध्यमायां सदा पादं शरणं स्यादनामयम् ॥ ४२ ॥
अनामिकाकनिष्ठायां प्रपद्ये च करेऽखिले ।
एवं च हृदयाद्यङ्गे पज्जानुकटिधामसु ॥ ४३ ॥
उपस्थनाभिहृत्कण्ठकरकूर्पांसकेषु च ।
मुखे च रसनाघ्राणनेत्रश्रोत्रेषु भ्रूषु च ॥ ४४ ॥
शिरःसु वैकशो वर्णान् विलोमेन न्यसेदथ ।
समस्तव्यापकं कुर्यादनुलोमाक्षरं मुखे ॥ ४५ ॥
भूतेन्द्रियमनोबुद्धिजीवतत्वैश्चसन्मते ।
प्रणवेन युतान् वर्णान् न्यसेदत्र दशाऽर्णवः ॥ ४६ ॥
न्यसेद्यथायथं स्थाने बीजैरन्यैः सकामतः ।
एवं न्यस्ततनुर्मन्त्री साक्षान्मन्त्रमयो भवेत् ॥ ४७ ॥
ध्यायेद्गोकुलमण्डलेऽतिविमले क्रीडन्मणिप्राङ्गणे ।
नीत्वा वै निजपाणिपल्लवतले हैयङ्गवीनं नवम् ।
बालैर्नृत्यपरैः परस्परगुणैरानन्दितं लालितम् ।
फुल्लेन्दीवरसुन्दरव्रजवनीवृन्दे मुकुन्दं हरिम् ॥ ४८ ॥
एवं ध्यात्वा शतं जप्त्वा पूजयेद्वा रमापतिम् ।
दशाक्षरमहान्यासं कुर्याद्वा परमोत्तमम् ॥ ४९ ॥
नारदो मुनिरस्यापि विराट्छन्दो मतः पुनः ।
नन्दनन्दो हरिर्देवो निगमागमसंस्तुतः ॥ ५० ॥
गोशब्देन जगत्सर्वं गोप्यश्च श्रुतयोऽवनात् ।
तदर्थजननात्सर्वा जनशब्देन कीर्तिताः ॥ ५१ ॥
वल्लभः परमात्मैव नित्यानन्दैकविग्रहः ।
ताभिर्विज्ञापितोऽस्माकं स्वप्रकाशः परप्रभुः ॥ ५२ ॥
तस्मै स्वमहसे स्वीयं स्वाहारूपेण संवृतम् ।
महसं प्रापयामीति मन्त्रार्थोऽयं भवेदिह ॥ ५३ ॥

स्निग्धा वृत्तिर्भवेद्गोपीजनस्तद्व्यापितो वरः ।
तदानन्दघनं कान्तं दासीभूत्वा नमाम्यहम् ॥ ५४ ॥
ममोऽन्तो भक्तिसन्मन्त्रः स्वाहान्तो ज्ञानकर्मणि ।
मन्त्रार्थं भावयेत्पूतो न्यासान् कुर्याद्यथाविधि ॥ ५५ ॥
पञ्चस्वरेण बीजेन पञ्चाङ्गानि भवन्ति ह ।
चक्रपञ्चकयोगैर्वा स्वाहान्तैर्जातिसंयुतैः ॥ ५६ ॥
हृच्छिरोऽथ शिखा प्रोक्ता तनुत्रं चास्त्रमुच्यते ।
पार्श्वयुग्मं कटियुगं पृष्ठं मूर्द्धा षडर्णतः ॥ ५७ ॥
मध्ये करे तस्य पृष्ठे पार्श्वयोस्तस्य मन्त्रतः ।
व्याप्य संहृतिसृष्टिभ्यां स्थित्या चाङ्गुलिषु न्यसेत् ॥ ५८ ॥
अर्णशः करयुग्मे च दशपञ्चाङ्गकानि च ।
मातृकामन्त्रवर्णाभ्यां पुटितां योजयेत्तनौ ॥ ५९ ॥
भूः कं खमित्याहुस्तथाहं महदित्यपि ।
प्रकृतिः पुरुषश्चाथो परस्तत्वैश्च दिङ्मितैः ॥ ६० ॥
मन्त्रार्णान् विन्यसेत्पादयुगे शेफसि वक्षसि ।
मुखे शिरसि हृन्मध्ये पुनस्तत्वद्वयं न्यसेत् ॥ ६१ ॥
सर्वाङ्गे तत्त्रयं प्रोक्तं एवं तु दशधा भवेत् ।
शिरो मुखं च हृदयं शिखां च चरणं तथा ॥ ६२ ॥
विलोमेन च विन्यस्य भवेत्तत्वमयः पुमान् ।
मस्तकादि च पादान्तं कुर्यात्त्रिव्यापकं पुमान् ॥ ६३ ॥
मूर्ध्नि घ्राणे च श्रवणे नासिकाननपाणिषु ।
उदरे शेफसि जान्वोः पादयोः सृष्टितो न्यसेत् ॥ ६४ ॥
हृदये चोदरे लिङ्गे जानुनोः पादयोस्तथा ।
मस्तके नयने श्रोत्रे नासायां वदने स्थितिः ॥ ६५ ॥
पादादिमूर्धपर्यन्तं संहारं सृष्टितोऽन्यथा ।
एवं त्रिधा न्यसेद्वर्णान् मन्त्रराजस्य चैकशः ॥ ६६ ॥

जानुलिङ्गजठरहृन्मुखघ्राणं च श्रोत्रहक् ।
विलोमा दशधा हृत्या स्थित्यापि च तृतीयकः ॥ ६७ ॥
मूले शिखौ च नाभौ च हृदि कण्ठे मुखे तथा ।
दक्षांसे चापि वामांसे दक्षेऽथापि च वामके ॥ ६८ ॥
स्कन्धदेशेऽपि नाभौ च कुक्षौ हृदि कटौ तथा ।
दक्षपार्श्वे वामपार्श्वे पृष्ठे चापि च श्रोत्रयोः ॥ ६९ ॥
मन्त्रराजस्य विन्यासः सर्वेषां च परः स्मृतः ।
मस्तकास्यदृष्टिमध्यश्रोत्राणां नासयोर्द्वयोः ॥ ७० ॥
बाहुमूले च मध्ये च मणिबन्धाङ्गुलीषु च ।
अङ्गुल्यग्रे दक्षवामभेदा तु दशधा द्विधा ॥ ७१ ॥
ऊरुमूले जानुगुल्फेष्वङ्गुल्याद्यग्रयोर्द्विधा ।
सव्यापसव्याद्दशधा पञ्चधाङ्गुलिभिश्च वा ॥ ७२ ॥
पूर्वदक्षिणपाश्चात्योदीचीषु शिरसाऽत्र च ।
वामदक्षविभेदेन भुजांसवियषु (?) तद्भवेत् ॥ ७३ ॥
मस्तके नयने चास्ये कण्ठे हृदि च तुन्दके ।
आधारे च शिवे जानुयुगे च प्रपदे तथा ॥ ७४ ॥
श्रोत्रयोर्नेत्रयोर्गण्डयुगे चांसयुगे तथा ।
पार्श्वस्फिगूरुजान्वाख्ययुगयोर्जङ्घयोः पदोः ॥ ७५ ॥
एवं हि दशधान्यासो दशार्णस्यार्णशः स्मृतः ।
विभूतिपञ्जरन्यासः सर्वन्यासवरः स्मृतः ॥ ७६ ॥
स्वमूर्तिपञ्जरन्यासं बिन्दुनादकलायुतम् ।
द्वादशार्णैः स्वरैः पुम्भिः केशवाद्यैश्च भास्करैः ॥ ७७ ॥
सर्वाङ्गबिन्दुरूपाय नादरूपपरात्मने ।
परतत्वात्मने शक्त्या शान्त्या ज्ञानात्मने नमः ॥ ७८ ॥
सच्चिद्ग्राह्यस्वरूपाय केवलानेकरूपिणे ।
स्वतःप्रकाशबोधाय प्रत्यग्धाम्ने नमो नमः ॥ ७९ ॥

भालेऽथ चोदरे वक्षस्थले कण्ठेऽथ दक्षिणे ।
पार्श्वाङ्गलभागे च वामे चैवं त्रिधा भवेत् ॥ ८० ॥
पृष्ठे ककुदि मूलेन द्वादशार्णं च मस्तके ।
सृष्टिस्थितिसंहृतिभिः पुनर्न्यासं दशाङ्ककम् ॥ ८१ ॥
पञ्चाङ्गास्त्राणि विन्यस्य मुद्राध्यानं समाचरेत् ।
वेणुमुद्रा प्रिया तस्य माला श्रीवत्सकौस्तुभौ ॥ ८२ ॥
ततो ध्यायेद्घनश्यामं पीतकौशेयवाससम् ।
रम्ये वृन्दावनारामे दिव्यकल्पतरोस्तले ॥ ८३ ॥
गवाङ्गणे गोपगणे व्रजस्य युवतीगणे ।
दर्शनीयतमं देवं कोटिमन्मथमन्मथम् ॥ ८४ ॥
सर्वानन्दघनं कान्तं सर्वभूषणभूषितम् ।
पादाब्जतलमारभ्य भावयेद्धारणापथैः ॥ ८५ ॥
तद्ध्यानानन्दमुदितो जपेत्तं पूजयेच्च वा ।
अस्य भावयतः सर्वाः सिद्धयोऽर्चन्ति पद्युगम् ॥ ८६ ॥
मनोऽभीष्टा गतिस्तस्य कृपया शार्ङ्गिणो भवेत् ।
निग्रहानुग्रहे शक्तो वश्याकर्षणवारणे ॥ ८७ ॥

इति श्रीशाण्डिल्यसंहितायां पञ्चमे भक्तिखण्डे मन्त्रराजन्यास-
निरूपणं नाम द्वादशोऽध्यायः ॥ १२ ॥

---

## त्रयोदशोऽध्यायः ।

शाण्डिल्य उवाच—
अथ श्रीसिद्धगोपालमन्त्रराजस्य भास्वतः ।
विधानं प्रोच्यते गुप्तं सारं श्रुतिगिरामिह ॥ १ ॥

पूर्वोक्तलक्षणैर्हीनो न चैनं प्रार्थयेत्क्वचित् ।
न स सिद्धिमवाप्नोति सिद्धिकामोऽपि यः सदा ॥ २ ॥
भवतां भक्तियोगेन भक्तानामनुकम्पया ।
सर्वगूढतमं वक्ष्ये हरिणा प्रेरितो हृदा ॥ ३ ॥
अष्टादशार्णमन्त्रस्य ऋषिर्ब्रह्मा प्रकीर्त्तितः ।
गायत्री त्रिपदा च्छन्दः श्रीगोपालो हरिप्रभुः ॥ ४ ॥
कृषिर्भूवाचको णश्च परमानन्दवाचकः ।
सदानन्दस्ततः कृष्णः प्रोच्यते पुरुषोत्तमः ॥ ५ ॥
गावो लोकात्मका जानन् स्वयं ते तु ततः पदात् (?) ।
नित्याखरिडतविज्ञानो गोविन्दो हरिरेव हि ॥ ६ ॥
एवं तु सच्चिदानन्दघनाय परमात्मने ।
श्रीगोपीजनकान्ताय जीवज्योतिः समर्पयेत् ॥ ७ ॥
अथ वा सच्चिदानन्दो भक्तरक्षणदीक्षितः ।
भक्त्यैकवृत्तिलभ्योऽसौ दासीभूत्वा भजाम्यहम् ॥ ८ ॥
मन्त्रार्थं भावयेदेवमाचम्यास्याङ्गकैस्त्रिभिः ।
प्राणानायम्य मूलेन न्यसेदङ्गैः सजातिभिः ॥ ९ ॥
आद्यबीजेन हृदयं कृष्णायेति शिरो मतम् ।
गोविन्दाय शिखा प्रोक्ता वर्म गोपीजनेति च ॥ १० ॥
वल्लभाय भवेन्नेत्रे स्वाहेत्यस्त्रमुदाहृतम् ।
न्यसेदेतानि करयोरङ्गुलीषु यथाक्रमम् ॥ ११ ॥
सर्वाङ्गे सर्वमेवैवं न्यसेद् व्याप्त्या त्रिधा ततः ।
प्रणवव्यापकं कृत्वा क्लीं बीजं चास्य एव वा ॥ १२ ॥
शिरोरराटभ्रूमध्यश्रोत्रनेत्रनसां द्वयोः ।
वक्त्रकरठे बाहुमूले बाहुमध्ये करद्वये ॥ १३ ॥
वक्षस्थले हृदि तथा नाभौ कट्यां च शेफसि ।
जानुद्वये पादयोश्च न्यसेदेकैकमक्षरम् ॥ १४ ॥

प्रणवं मस्तके कृत्वा पदन्यासं समाचरेत्।
मस्तके वदने वक्षःस्थले गुह्योरुयुग्मयोः ॥ १५ ॥
पञ्चाङ्गं च पुनर्न्यासं पूर्वोक्तं चास्य संचरेत्।
अथ न्यासान्तरान्वक्ष्ये नमोऽन्तस्य महामनोः ॥ १६ ॥
यैर्दिव्या जायते भक्तिस्त्रिषु लोकेषु दुर्लभा।
मातृकामेकपञ्चाशद्भेदे कृत्वा त्रिधादितः ॥ १७ ॥
आचमेत्तैस्त्रिभिः स्वाङ्गैः शिखाबन्धनपूर्वकम्।
ब्रह्माण्डविवरे लग्नां ध्यात्वा शिरसि भासुराम् ॥ १८ ॥
सुषुम्णां हरिपादाब्जनीरनीलहरीमिव।
तदध्वलब्धगङ्गाम्भःसिक्तामात्मतनुं तनुम् ॥ १९ ॥
संहरेत्तेन मार्गेणानन्तवक्त्रानिलानलैः।
भूर्याति गन्धं गन्धोऽपि सलिलं तद्रसो रसम् ॥ २० ॥
वह्निं वह्नेः स्वरूपं च रूपं वायुपथे स च।
स्पर्शं स्पर्शोऽपि चाकाशं तच्च शब्दं स चात्मनि ॥ २१ ॥
इन्द्रियाणि मनस्तानि मनो वैकारिकं महत्।
स्वस्वाधिष्ठितदेवेशैः संहृत्य प्रकृतिं जपेत् ॥ २२ ॥
वासनाभिः कर्ममलैर्नयेद्ब्रह्मणि तां लयम्।
अक्षरात्मतयात्मानं भगवच्छब्दशब्दिते ॥ २३ ॥
नत्वा प्रसादं सम्प्राप्य भवेदक्षरतां गतः।
नादात्मनोन्मुखीभूतघनीभूतेन विन्दुना ॥ २४ ॥
कलाविलासरूपेण विश्वमक्षरमूर्तिमत्।
वासुदेवाक्षरं प्राप्य ततः सङ्कर्षणं स्मरेत् ॥ २५ ॥
प्रद्युम्नं मध्यगं कृत्वाऽनिरुद्धं सर्वतस्ततम्।
तत्वमूर्तिमयो भूत्वा प्रणवेन परात्मना ॥ २६ ॥
ततो मूलार्णसतत्त्वनिर्मितां भावयेत्तनुम्।
१ २ ३ ४ ५ ६
अणो ऋकस्तथा चैचो विन्दुसर्गौ च दीर्घकः ॥ २७ ॥

७ ८ ९ १० ११
प्लुतोदात्ताऽनुदात्ताश्च लयः स्पर्शस्य पञ्चकम् ।
१२ १३ १४ १५ १६
अन्तस्थाश्चोष्मकाल्लं क्षं तथाचार्द्धविसर्गकौ ॥ २८ ॥
१७ १८
अनुनासिकसंज्ञाश्च यमाश्चाष्टदशार्णकाः ।
मन्त्रराजस्य क्लृप्ता वै वर्णैर्वर्णगणः स्वयम् ॥ २९ ॥
पुरुषः प्रकृतिर्भूतपञ्चकैरिन्द्रियाणि च ।
मनः क्रमेण तत्वानां न्यासं प्रोक्तं यथाक्रमात् ॥ ३० ॥
शिरोरराटेन्द्रियाणि हृदयं नाभिरेव च ।
पार्श्वं पृष्ठः ककुच्चेति कल्याङ्गानि विदुर्बुधाः ॥ ३१ ॥
पुरुषो मूर्तयो दिव्याः केशवो भवता विभुः ।
गोपालश्चेति मूलार्णैर्वृत्तिपञ्चाङ्गकं भवेत् ॥ ३२ ॥
मूर्तिपञ्चाङ्गकं न्यस्य तत्वसप्ताङ्गकं न्यसेत् ।
षड्विंशपञ्चविंशश्च भूरसेन्दुगुणेन्दुभिः ॥ ३३ ॥
रुद्रैश्छिद्रैश्च सत्तत्त्वैर्निजनाथैर्निजाङ्गकैः ।
गोपालकेशवाद्यैश्च विभुः षड्विंशके मताः ॥ ३४ ॥
शिरोवक्त्राकृतौ नेत्रश्रोत्रनासासु जैह्वके ।
कण्ठहृन्नाभिलिङ्गेषु मूलाधारे च पृष्ठके ॥ ३५ ॥
तथा ककुदि बाह्वोश्च पार्श्वयोः पादयोस्तथा ।
त्वगसृग्मांसमेदोऽस्थिमज्जाशुक्रेषु चादिगः ॥ ३६ ॥
वक्त्रमण्डलहीनोऽन्यः परे तत्वानुसारतः ।
षड्विंशे पुरुषो जीवः प्रकृतिः प्रकृते कृतिः ॥ ३७ ॥
सप्तषोडशकं चापि विकारगणमुच्यते ।
अभिन्नः पुरुषाज्जीवस्तत्वानां पञ्चविंशके ॥ ३८ ॥
भूतमात्रेन्द्रियात्मानः स्युः सप्तदशके हरिः ।
षोडशे हरिरात्मैव भूतेन्द्रियमनोयुतः ॥ ३९ ॥
जीवात्मपरमात्मानौ तत्वानां स्युस्त्रयोदश ।
पुरुषः प्रकृतिर्व्यक्तमहङ्कारेण पञ्चकम् ॥ ४० ॥

एकादश मनोजीवौ न च प्रोक्तं तु तौ विना ।
मात्राज्ञानेन्द्रियाणि स्युस्तानि भूतानि कर्मभिः ॥ ४१ ॥
पुरुषस्तु शिरःप्रोक्तोऽप्यन्यच्च हृदयादिकम् ।
स्वरव्यञ्जनयोगेन मूलमेभिः प्रविन्यसेत् ॥ ४२ ॥
तत्र मुद्रामुपाश्रित्य प्राणायामपथाश्रितः ।
अस्पर्शास्पर्शकान्तस्थाः स्वरा एव स्वरास्तथा ॥ ४३ ॥
बिन्दुसर्गविहीनास्ते सर्गखण्डगताः परे ।
वर्गशः स्वरमूलार्णतत्वानां क्रमशो मताः ॥ ४४ ॥
एवं विन्यस्य मूलार्णानायम्याचम्य मूलतः ।
विभूतिपञ्जरं चैव न्यसेद्वै मूर्तिपञ्जरम् ॥ ४५ ॥
विभूतयो हरेः सृष्टा मूर्तयो हरिणा धृताः ।
लोकन्यासं ततः कुर्यात्क्ष्मापातालादिसत्यतः ॥ ४६ ॥
भूतन्यासं ततो वर्णाश्रमवेदादि विन्यसेत् ।
न्यसेत्तत्त्वकला दिव्याः सिद्धयः शक्तयस्ततः ॥ ४७ ॥
गुणाश्च हृदये स्वस्थो न्यसेद्भगवतो मुनिः ।
आनन्दविग्रहं न्यासं ततः कुर्यात्त्रिधा हृदि ॥ ४८ ॥
ध्यात्वा भगवतो मूर्तिं सर्वावयवसुन्दराम् ।
फुल्लेन्दीवरनीलाभां किशोरां परमाद्भुताम् ॥ ४९ ॥
पीताम्बरां चित्रमाल्यां मुक्ताभरणभूषिताम् ।
मायूरमुकुटोष्णीषवेणुवेत्रालकैर्वृता ॥ ५० ॥
पादयोस्तस्य वाराहं जान्वोर्नरहरिं स्मरेत् ।
ऊरुद्वये मत्स्यमस्य कट्यामेव त्रिविक्रमम् ॥ ५१ ॥
अग्रजं चोदरे कृत्वा हृदि कृष्णं जगत्पतिम् ।
कण्ठे कूर्मं च भुजयोर्ध्यायेद्रामं सहानुजम् ॥ ५२ ॥
मुखे बलं सदा विज्ञं कल्किनं ककुदि न्यसेत् ।
तथागतं पृष्ठदेशे कादिमन्त्रैर्यथोदितैः ॥ ५३ ॥
१ २ ३ ४ ५
संवित्तिः परमामोदा अखण्डा नित्यभासुरा ।

६ ७ ८ ९ १०
स्वतन्त्रा स्वेच्छिकालङ्घ्यादिव्योऽप्यक्लिष्टकारिणी ॥ ५४ ॥
११ १२ १३ १४ १५ १६
ईश्वरी चापि विज्ञात्री कीर्तिः श्री करुणा धृतिः ।
एतास्तु षोडशकलाः षोडशाङ्गेषु भावयेत् ॥ ५५ ॥
१ २ ३ ४ ५ ६
प्रियं मोदं प्रमोदं च ब्रह्मानन्दं रसं तथा ।
भगषट्केन भक्तस्तद्द्वादशाङ्गेषु भावयेत् ॥ ५६ ॥
लीलाविग्रहमस्यापि न्यसेन्न्यासचतुष्टयम् ।
माथुरं मण्डलं पादे जान्वन्तं क्षीरसागरम् ॥ ५७ ॥
श्वेतद्वीपं च कट्यन्तं नाभ्यन्तं तु रमागृहम् ।
वक्षोऽतं शुद्धवैकुण्ठं व्यापि वैकुण्ठकं हृदि ॥ ५८ ॥
कण्ठे कालिन्दीनिकेतं बाह्वोर्गोवर्धनं गिरिम् ।
मुखे वृन्दावनं भव्यं ललाटे गोकुलं न्यसेत् ॥ ५९ ॥
श्रुतिसिद्धाः पादयोः स्युः तपःसिद्धास्तु मध्यतः ।
भक्तिसिद्धास्तु भुजयोर्नित्यसिद्धास्ततो मुखे ॥ ६० ॥
गोपालदशकं तस्य नवाङ्गेषु विभावयेत् ।
गुणैश्च विग्रहैः स्वैः स्वैः स्वरूपन्यास उच्यते ॥ ६१ ॥
लीला तु संमुखे तस्य भक्तिरस्य च दक्षिणे ।
पृष्ठेऽस्य योगमाया तु ईशशक्तिस्तथोत्तरे ॥ ६२ ॥
अधस्तात्तु क्रियाशक्तिर्ज्ञानशक्तिस्तथोर्ध्वतः ।
स्वेच्छासिद्धिं तु सर्वत्र तस्य देवस्य चिन्तयेत् ॥ ६३ ॥
ध्यायेत्पादतले तस्य उत्कुशेशयपल्लवे ।
वज्राङ्कुशध्वजयवस्वस्तिकाद्युपलाञ्छिते ॥ ६४ ॥
भक्तिः पराङ्गसंपूर्णे भक्तसारङ्गसेविते ।
तर्कशक्तिसमाकीर्णे कालव्यालभयच्युते ॥ ६५ ॥
पादाब्जलतिकाङ्गुल्यो नखचन्द्रांशुराजिताः ।
भाग्यसौभाग्यसंरक्ता मुनिमानसनूपुराः ॥ ६६ ॥

गुणमञ्जीरकटकैर्गुल्फकन्दे महन्मये ।
पुष्करे जङ्घयुगुले श्रियासंलालिते शुभे ॥ ६७ ॥
जानुनी मुकरे भव्ये भक्तदोषनिवारके ।
रम्भास्तम्भनिभं चोरुयुगं मौञ्जीगणोद्धतम् ॥ ६८ ॥
चक्रबिम्बनिभे तस्य नितम्बे विक्रमक्रमे ।
पीताम्बरं योगमायामयं काञ्चीं श्रियं मताम् ॥ ६९ ॥
नाभिं नभोनिम्नतरां वलिवल्गूदरे हरेः ।
भुवनाम्भोजजलधिं अतसीकुसुमप्रभम् ॥ ७० ॥
हरिन्मणिगणाबद्धकपाटं हृदयं हरेः ।
श्रेयसः सकलस्यास्य श्रियः श्रीवत्समालयम् ॥ ७१ ॥
हारग्रैवेयरुचकैः कलाभिरुपशोभितम् ।
कौस्तुभं कम्बुकण्ठस्थं कैवल्यमिव मूर्तिमत् ॥ ७२ ॥
वैजयन्तीं परां भूतिं वनमालां यशोमयीम् ।
वेदत्रयीं यज्ञसूत्रधृतिमंसयुगं विभोः ॥ ७३ ॥
स्थलाम्बुजे करतले क्षेमस्य शरणस्य च ।
पञ्चविद्यानिभास्तस्य अङ्गुल्यः कल्पशाखिनः ॥ ७४ ॥
भुजे भुजगभोगाभे लोकपालमहोदये ।
सर्वसिद्धिमणिव्रातमुद्रिकाः कटकाङ्गदौ ॥ ७५ ॥
चुबुकं हिबुकं तस्य चेतोलोहस्य मुद्गरम् ।
पूर्णचन्द्रप्रभे वक्त्रे गण्डे मुकुरसुन्दरे ॥ ७६ ॥
अलकैर्ललिते मुक्तैर्योगसाङ्ख्ये सुकुण्डले ।
अनुरक्ताऽनुरागेण लोभेनाधरपल्लवम् ॥ ७७ ॥
दन्तैः स्नेहकलाव्यक्तैः कुन्दकुड्मलशोभितैः ।
ह्रियमाणोत्तरोष्ठेन स्मितं भक्ततिरस्कृतौ ॥ ७८ ॥
निगमागमसंगीतसरणीं रसनां दधत् ।
तिलप्रसूनोन्नसेन सुषमैकधनेन वै ॥ ७९ ॥

अरविन्ददलाभ्यां च लोचनाभ्यां कृपावृतम् ।
वर्षद्भक्तजनीवृन्दे मुखेन्दुवरमण्डलम् ॥ ८० ॥
भ्रुकुटी धनुषे विज्ये भयभङ्गकरे नृणाम् ।
तपोमयं ललाटोऽस्य पदं मारकतप्रभम् ॥ ८१ ॥
दधन्माणिक्यतिलकं चारुमुक्ताललन्तिकाम् ।
सुरत्ने कर्णाभरणे कर्णे मीमांसिके शुभे ॥ ८२ ॥
मायूरमुकुटं भास्वन्मणिमञ्जुलमण्डितम् ।
बिभर्ति परमां ज्योतिः सारभूतिं च चक्रिमाम् ॥ ८३ ॥
दधत्केतकसत्पत्रं भक्तिसौरभसंश्रयम् ।
वेणीं पन्नगराजस्य भोगभूतां मनोहराम् ॥ ८४ ॥
स्वरब्रह्मात्मिकां तस्य भजनानन्दमन्दिराम् ।
करे मुरलिकां दिव्यां संमोहनहरिप्रियाम् ॥ ८५ ॥
वेत्रं चापि जगन्नेत्रं गवां तेषां गिरां शुभम् ।
पादुके भक्तियुगुले पीठमक्षरमुत्तमम् ॥ ८६ ॥
चामरे व्यजने कान्ते यशोधर्मौ मधुद्विषः ।
भक्तप्रेमघनं छत्रं श्वेतं चामृतवर्षणम् ॥ ८७ ॥
क्रीडोपस्करणं भक्तिप्रभेदबहुधोदितम् ।
भृङ्गारकं च मुकुरं भुक्तिवीटकभाजने ॥ ८८ ॥
चतुर्धा तत्तत्प्रकारैः पुराणानि च केलयः ।
पार्षदप्रवरा भक्ता यमुनोपनिषद्रसा ॥ ८९ ॥
षडैश्वर्यगुणं कान्तं लीलाकमलमुत्तमम् ।
श्रुतयो गोपिका दिव्या गावोऽपि स्मृतयः शुभाः ॥ ९० ॥
देवेशा बालकास्तत्र मुनयोऽपि विहङ्गमाः ।
चिन्तामणिमयं स्थानं कल्पद्रुविपनं शुभम् ॥ ९१ ॥
एवं महोत्तमध्यानं कृत्वा हृदयमण्डले ।
आरभेत सपर्यान्तं यथाविभवविस्तृतम् ॥ ९२ ॥

दिव्यन्यासमये धीरो वक्ष्यमाणार्चनं भवेत् ॥ ६३ ॥
मिश्रन्यासस्य वक्ष्यामि पूजनं सुरदुर्लभम्।
नैतन्न्यासात्परो न्यासः श्रीगोपालस्य च वल्लभः ॥ ६४ ॥
सकृत्कृतेऽपि ते तस्थुः पादाक्रान्तसुराधिपाः।
स्वेच्छासिद्धिः स्वयं तस्य चरणाम्भोजसेविनाम् ॥ ६५ ॥
न शिष्यतेऽत्र कर्तव्यं पुरुषार्थचतुष्टये।
अनेन दीक्षितो यस्य कुले भवति भूसुरः ॥ ६६ ॥
सोऽपि सर्वकुलः पूज्यो यथा देवो रमापतिः।
पूजया चोपदेशेन सिद्धिरेषां गरीयसी ॥ ६७ ॥
दीक्षितस्यैव वंश्यानां कुलदीक्षा प्रजायते।
उपदेशे कृते तेषां सिद्धिरव्यभिचारिणी ॥ ६८ ॥
प्राणात्ययेऽपि नो वाच्यं रहस्यं दुर्धियं प्रति।
येन केन प्रकारेण गोपनं फलसिद्धये ॥ ६९ ॥

इति श्रीशाण्डिल्यसंहितायां पञ्चमे भक्तिखण्डे न्यासाध्यायवर्णनं नाम त्रयोदशोऽध्यायः ॥ १३ ॥

---

## चतुर्दशोऽध्यायः।

शाण्डिल्य उवाच—

आचम्य कुसुमैर्मन्त्रैर्गोविन्दस्यापि सौरभैः।
करौ प्रक्षाल्य शृङ्गारपीठे देवं नयेत्ततः ॥ १ ॥

रथपीठे प्रतिष्ठाप्य नयेच्छृङ्गारमण्डपम् ।
गुरोराज्ञां समासाद्य महामन्त्रं समुच्चरेत् ॥ २ ॥
भो भो भक्तजनानन्द परमानन्द कृपानिधे ।
मदीयसेवनासिद्धयै व्रज शृङ्गारमण्डपम् ॥ ३ ॥
इत्युक्त्वाथो महामन्त्रं जगत्रयभगोदयम् ।
स्वीयात्मपरिवारैश्च ततः श्रीगोकुलेश्वर ॥ ४ ॥
श्रीमद्यशोदाप्राणैकधनेत्युक्त्वा ततो वदेत् ।
कृपया श्रीमदार्याणां स्वकीयमनुगृह्य माम् ॥ ५ ॥
सोपचारं ततोऽप्युक्त्वा द्विवारं चोपधारयेत् ।
दासोऽहं श्रीनाथ तवास्मीत्येवं परिकीर्तयेत् ॥ ६ ॥
पुष्पाञ्जलिं समर्प्याथो यन्त्रराजं निवेशयेत् ।
शृङ्गारपीठादादाय श्रीनाथस्य पदाब्जयोः ॥ ७ ॥
सौवर्णं राजतं वापि बीजषट्कोणमण्डितम् ।
वृत्तं दिग्दलसंशोभि वलयैर्भूपुरार्चितम् ॥ ८ ॥
बाह्योद्देशमनोहारि श्रीविहारिनिकुञ्जकम् ।
प्रतिष्ठितं वैदिकेन विधानेन शुभोदये ॥ ९ ॥
सङ्कल्पयेदथाखण्डं लिलानन्दविहारिणः ।
विहाराय निकुञ्जस्य स्थापयेद्द यन्त्रमन्दिरम् ॥ १० ॥
विन्यस्यात्मनि मन्त्रांश्च भूतशुद्धिं विधाय च ।
शरणाख्यमहायन्त्रं मूलेनात्रापि विन्यसेत् ॥ ११ ॥
ततस्तीर्थजलैः पुष्पैः सेवनं तुलसीदलैः ।
पीठन्यासोक्तमन्त्रैश्च दिव्यमन्त्रैस्तथा परैः ॥ १२ ॥
महामन्त्रं समुच्चार्य व्रजेशमिथुनं नयेत् ।
पञ्चामृताम्बुभिः स्नाप्य पूजयेन्मूलमन्त्रतः ॥ १३ ॥
कृत्वाऽधिवासनं चैव पीठे चाष्टदलं चरेत् ।
मथुरादि समारभ्य गोकुलान्तानि पूजयेत् ॥ १४ ॥

विहारकुञ्जं वृन्दाया ध्यात्वा चारु वनं ततः।
मिथुनं पूजयेत्कुर्यात्त्रिदिनं सुमहोत्सवम् ॥ १५॥
पायसेन हुनेदग्नौ वैदिके मूलमन्त्रतः।
ब्राह्मणान् तर्पयेद्भक्त्या हरिं सन्तर्प्य मार्ज्जयेत् ॥ १६॥
एवं सिद्धे महायन्त्रे हरिः सन्निहितः सदा।
भवेत्पारिकरैः साकमन्यथा चैकलप्रभुः॥ १७॥
एवं प्रतिष्ठिते यन्त्रे नित्यपूजां भजेद्धरेः।
विधाय चोपचाराणि शालग्रामादिनान्विते॥ १८॥
यन्त्रे पुष्पाञ्जलिं दद्याद्गयत्र्या मूलमन्त्रतः।
आचम्य स्वासने स्थित्वा पात्रासादनमाचरेत्॥ १६॥
स्नानमण्डपतो वामे मण्डले क्षीरसागरम्।
शीतामलामृता मोदा शुक्ला शुद्धाः समर्चयेत्॥ २०॥
पिण्डेन नाम्ना पादेषु त्रयीं पीठे ह्यथर्वणम्।
तीर्थतत्वं पाञ्चजन्यं तत्वतीर्थसरित्त्रयीम्॥ २१॥
इमं म इति सम्पूर्य ब्रह्मानन्दं सुयामुनम्।
शुद्धाम्बुकलशादत्र गन्धमाल्ये ततो ददेत्॥ २२॥
श्रीनाथहस्ताम्बुजराजहंस।
मुक्ताफलन्मानसतीर्थसंस्थः॥
श्रीकान्तकण्ठप्रभवेत घोषः।
समर्चने सन्निहितो दरोऽस्तु॥ २३॥
सर्वत्रैव नमो वाच्यं श्रीनाथस्यामुकाय ते।
इति दत्वा दक्षकोणे कुम्भं शुद्धाम्बुसम्भृतम्॥ २४॥
मण्डले चन्द्रसरसं यन्त्रेषु यमुनां प्रियाम्।
कुमुद्वतीं कञ्जवतीं निकुञ्जां मञ्जुघोषिणीम्॥ २५॥
अपराधहरीं पुण्यां लावण्यामृतवर्षिणीम्।
पादेषु वरुणो विष्णुः सोमः श्चौर्द्धयथः सरः (?)॥ २६॥

नमोऽमलयामुनाब्जाय यन्त्रस्य मुखादिषु ।
गोविन्दं च मुकुन्दं च वासुदेवं समर्चयेत् ॥ २७ ॥
तदर्पितेऽथ पानीये विशेषाम्बुघटं न्यसेत् ।
स्वादिष्ठयेति सम्पूर्य पुनः शङ्खस्य दक्षिणे ॥ २८ ॥
स्नानीयकलशं स्थाप्यं शङ्खार्घ्याचमनान्यथ ।
शङ्खतीर्थेन सम्प्रोक्ष्य सर्वपूजोपचारकम् ॥ २९ ॥
शङ्खादुत्तरतश्चाधो शेषं भूमिं हिमाचलम् ।
कैलासं हेमकूटं च केसरं रत्नपर्वतम् ॥ ३० ॥
कपर्दनार्कौ सम्पूज्य दिवं ब्रह्मकमण्डलु ।
ततो ब्रह्मद्रवां गङ्गां तत्र वाच्ये सितासिते ॥ ३१ ॥
द्रव्यं दत्वा ततः पात्रान्तरे शुद्धाम्बुपूरणम् ।
शुद्धाम्बुकलशं चार्प्य देवभृङ्गारकादिह ॥ ३२ ॥
ततोऽर्द्धतो मण्डलेऽर्च्य कुसुमाकरपुष्करम् ।
दलेषु अम्बुजा कृष्णा विष्णुक्रान्ताथ केतकी ॥ ३३ ॥
वृन्दा कुन्दा चम्पका च मन्दारा मोदनी पुनः ।
पात्रे प्रभाकरं चार्घजले पुष्करपुष्करम् ॥ ३४ ॥
पात्रान्तरे तथाधाय द्रव्यं दत्वा पिधाय च ।
तद्दक्षिणादधो भानोः पुष्करं तच्छदाष्टके ॥ ३५ ॥
श्रद्धा सुतीर्था मोदा च प्रमोदा कान्तिका प्रभा ।
रसा मधुमती मध्ये क्षीरधीः कामधुक् ततः ॥ ३६ ॥
हंसजाचमनीयेऽत्र पूर्ववत्पूजनादिकम् ।
तदूर्ध्वमण्डले पूर्वं पूज्या मधुसरस्वती ॥ ३७ ॥
स्वदिष्ठा च मदिष्ठा च सोमा यज्ञा गिरिश्रुताः ।
रसान्ता मृदुगोपूर्वा रसा तिस्रोऽथ मध्यतः ॥ ३८ ॥
यज्ञपत्न्यः स्वर्णपात्रे ध्यायेन्नीलकन्दम्बकम् ।
शर्कराज्यमधु न्यस्य पुष्टिं मधुभिरर्चयेत् ॥ ३९ ॥

स्नानपीठं विधायात्र पृष्ठे स्नानीयसाधनम्।
गन्धं माल्यं च धूपं च दीपं पृथु तदग्रतः॥ ४०॥
पादुके तालवृन्ते च उपपात्राम्बरादिकम्।
यथर्तुविभवं स्थाप्यं ततः शृङ्गारमण्डले॥ ४१॥
पूर्वादिक्रमतः पूर्वं मण्डले ललितां यजेत्।
इन्दुकुङ्कुमकाश्मीरागुरुपाठीररोचनाः॥ ४२॥
सख्यः परिमलापात्रे सारङ्गा हरिचन्दनम् (?)।
तदग्रे शोभनादिष्टऋतुभिः पूज्यमप्यधि॥ ४३॥
पारिजातं ततः पात्रे चन्द्राकरसरोरुहम्।
वृन्दासुकुसुमान्यत्र अन्यत्सर्वं तु पूर्ववत्॥ ४४॥
तदग्रे कल्पवृक्षं च कोणेष्वस्य चतुष्टयम्।
मलयागुरुके चापि गार्हपत्यममत्रके॥ ४५॥
वह्नावाहवनीयं च धूपे संभावयेद्धविः।
ततोऽग्रे मण्डले ज्ञानं कोणे सूर्येन्दुपावकाः॥ ४६॥
तारिकातडितं रत्नं परमात्मास्य मध्यतः।
पात्रे ज्योतिः पदं द्रव्ये निगमं वर्तिकां धियम्॥ ४७॥
ब्रह्मज्योतिरियं ज्योतिः पात्रन्यासो हरेरयम्।
गुरुपीठादधस्तस्य कलशार्घ्याचमत्रयम्॥ ४८॥
गन्धमाल्यद्वयं चापि न्यसेद्वर्तुलमण्डले।
स्नानपीठात्परत्रापि पात्राण्येवं स्वमन्त्रतः॥ ४९॥
पीठे शङ्खं च घण्टां च न्यसेत् षट्कोणमण्डले।
तेजस्तत्वं ततः पञ्चचक्रेणापि सुदर्शनम्॥ ५०॥
विष्वक्सेनं तु घण्टायां स्वतिमन्त्रेण पूजयेत्।
जलतत्वं ततः कोणे देवदत्तादिपञ्चभिः॥ ५१॥
वेदघोषं समभ्यर्च्य तच्छंय इति तद्वरम्।
भगवत्पृथुपात्रं तु ततः प्रक्षाल्य पूरितम्॥ ५२॥

स्नानपीठाग्रतः कार्यं गुरोः पृथुलमाहरेत् ।
प्रक्षाल्याचम्य चायम्य नमो ब्रह्मेति मन्त्रतः ॥ ५३ ॥
आचार्यपादुके चार्ये न्नित्ये नैमित्तकेऽथ वा ।
चरणं त्र्यंचकं चेदमग्निमग्नेरुतामृतम् ॥ ५४ ॥
तद्विष्णोश्च नमो ब्रह्मण इत्येवं प्रपूजयेत् ।
चिदान्दमये ज्ञानभक्तिसौरभसंपदी ॥ ५५ ॥
कारुण्याम्बुधिसंजाते गुरुपादाम्बुजे नुमः ।
शब्दार्थचरणौ स्तर्कमध्यो योगहृदन्तरः ॥ ५६ ॥
वेदान्तवदनस्तस्मै हरये गुरवे नमः ।
शब्दब्रह्मपरब्रह्मनिष्णातं सर्वसद्गुणम् ॥ ५७ ॥
भक्तिशास्त्रप्रदं वन्दे श्रीमदार्यपदोर्युगं ।
षड्गुणैश्वर्यसम्पन्नं हरिलीलैकसाक्षिणम् ॥ ५८ ॥
प्रपन्नजनमन्दारमाचार्यं प्रणमाम्यहम् ।
भज्यमानन्दलब्ध्यर्थं भक्तवृन्दैरुपासितम् ॥ ५९ ॥
श्रीनन्दनन्दनात्मानं वन्दे वन्दारुवत्सलम् ।
अविघ्नं कुरु मे नाथ अर्चनाज्ञां प्रदेहि मे ॥ ६० ॥
तव पादाम्बुजध्यानात्सफलास्तु कृतिर्मम ।
तदैव पूजनं ह्येतच्छ्रीमतैवानुशासितम् ॥ ६१ ॥
तवैवतः प्रसादोऽस्तु त्वदीयोऽहं यतः प्रभो ।
इति स्तुत्वार्पयेत्तस्मै मूलेन कुसुमाञ्जलिम् ॥ ६२ ॥
ततस्तस्योपपीठेऽपि शेषं शक्तिं स्तुवेद्यथा ।
अनन्त देव देवेश शब्दब्रह्मात्मक प्रभो ॥ ६३ ॥
सर्वासुरोपसंहारभक्तरक्षापरायण ।
देशतः कालतो दैवादर्चायाः विघ्नशान्तये ॥ ६४ ॥
आद्यायाः सिद्धयेऽस्माकं भवन्तं प्रणमाम्यहम् ।
पुण्डरीकप्रभो देव सहस्रवदन स्वराट् ॥ ६५ ॥

अर्चाभक्तिप्रसिद्ध्यर्थमस्तु मे वरदो विभुः ।
यः प्रपन्नं जनं पाति कालव्यालभयादपि ॥ ६६ ॥
उपज्ञं भक्तिशास्त्राणां विज्ञानस्य गुरुं नुमः ।
ममार्चने विघ्नकरा मोहलोभमदादयः ॥ ६७ ॥
ते सर्वे विलयं यान्तु श्रीमत्सङ्कर्षणाज्ञया ।
असुराणां विमोहाय सुराणां कार्यसिद्धये ॥ ६८ ॥
आदिष्टा प्रभुणा देवि ममार्चामपि साधय ।
यथा हि व्रजसुन्दर्यस्त्वया संयोजिता हरौ ॥ ६९ ॥
तत्प्रसादादेव देवि तथा मामपि योजय ।
स्थिता वृन्दावनद्वारि भक्तानां कार्यसिद्धये ॥ ७० ॥
देवीदेवप्रिये देवि निर्विघ्नं कुरु मेऽर्चनम् ।
यशोदागर्भसम्भूते जगतां पूजिते परे ॥ ७१ ॥
महामन्त्रार्चनकरे नमस्ते परमेश्वरि ।
इत्येवं समनुज्ञाप्य प्रक्षाल्याचम्य पादुके ॥ ७२ ॥
पीठे निधाय तत्पात्रैरर्चेत्पूर्वोक्तमन्त्रतः ।
पुनः संस्थाप्य तत्पीठे स्तुवेद्‌ गुरुपरम्पराम् ॥ ७३ ॥
त्रिपुरारिसमारम्भां श्रीमदाचार्यमध्यमाम् ।
मदीयाचार्यपरमां वन्दे गुरुपरम्पराम् ॥ ७४ ॥
पुष्पाञ्जलिं समर्प्यैवं हस्तौ प्रक्षाल्य चाचमेत् ।
शृङ्गारपीठमागत्य ध्यात्वा शेषं यथोदितम् ॥ ७५ ॥
तन्मन्त्रेण समभ्यर्च्य वाराहं चैवमर्चति ।
सर्वरत्नम्भरा सर्वंसहा विष्णुप्रिया इति ॥ ७६ ॥
नमो धरायै धरणीं ततोऽर्चेत् क्षीरसागरम् ।
अनिरुद्धनिवासाय शुद्धैश्वर्याय श्रीमते ॥ ७७ ॥
वर्तुले तत्र वैकुण्ठं विरजामपि नन्दनम् ।
अभ्यर्च्य च ततो नन्दसुनन्दादीन् प्रपूजयेत् ॥ ७८ ॥

ब्रह्मविष्णुशिवाः सूर्यश्चतुष्कोणेष्वतोऽन्तरे ।
मथुरामण्डलं नत्वा तत्राष्टदलकेसरान् ॥ ७९ ॥
ततोऽन्तःकेशरेऽभ्यर्च्य वृन्दाद्या योगमायया ।
कर्णिकासु व्रजं पीठे पादेषु गिरिपञ्चकम् ॥ ८० ॥
वृन्दावनं तदुपरि निदध्याद्यन्त्रमुत्तमम् ।
विहारकुञ्जं तत्रार्च्य व्रजेशमिथुनं ततः ॥ ८१ ॥
सौवर्णीमर्चयेद्धर्मिं गोकुले वेदसम्मितम् ।
द्वारेषु वेदाः सम्पूज्या ज्ञानभूमिस्तदन्तरे ॥ ८२ ॥
सर्वात्मभावयुग्भक्तिदलानि दशधाप्यतः ।
प्रेमात्मकेशरानस्मान्यमुनोपनिषद्रसान् ॥ ८३ ॥
भगषट्कं ततोऽभ्यर्च्य योगिहृत्पद्मतूलिकाम्
प्रियोत्तरीयावरणमभ्यर्च्य कुसुमाञ्जलिम् ॥ ८४ ॥
सकलेऽतिस्वनिगमागम्यभक्त्यैव लभ्यति ।
रतिशयाखण्डनित्यलीलेति च विहारभूः ॥ ८५ ॥
पायश्रीपुरुषोत्तेति मविहारेति (?) चोच्चरेत् ।
पीठाय नम इत्युक्त्वा पीठमन्त्रात्समर्पयेत् ॥ ८६ ॥
अनेन राजपीठादौ न्यासे पुष्पाञ्जलिर्भवेत् ।
स्नानपीठं ततोऽभ्यर्च्य मण्डले मानसी सरित् ॥ ८७ ॥
पानीयमानप्रेमेन्दुसरांसि च विदिक्ष्वतः ।
पीठपादेषु कुसुमं हरिं भानुमजं यजेत् ॥ ८८ ॥
पुष्करं पीतकं चोर्ध्वं सर्वतो यामुनेऽशके ।
ततोऽष्टदिक्क्रमेणास्य कूपघट्टाम्बुभृत्सरान् (१) ॥ ८९ ॥
वनोपवनन्यग्रोधतापिच्छादि प्रपूजयेत् ।
वन्दिनी नन्दिनी चापि व्रजेशपरिचारिके ॥ ९० ॥
हस्तप्रक्षालनं ह्यत्र मण्डले मण्डले भवेत् ।
पृथक्पत्रेण दिव्यैश्च पूजनं च यथायथम् ॥ ९१ ॥

---

( १ ) व्रज एतानि कुण्डानि प्रसिद्धानि ।

हर्यादेशिकदेवात्मपात्रादौ नायुतिश्चरेत्।
क्रमशो विमला तेषां नावमोपरतोऽशुचिः (?) ॥ ९२ ॥
स्नातो स्नातेन सख्यारादद्वारो दूष्यते ह्यतः।
एवं द्रव्येऽप्यशुद्धिः स्यात्स्पर्शात्पात्रांशुकादिषु ॥ ९३ ॥
पीठादिपूजनं प्रोक्तं प्रभोः पृथुलपात्रतः।
एवं संसिद्धसर्वाङ्गः प्रक्षाल्याचम्य शोधयेत् ॥ ९४ ॥
पुष्पाञ्जल्या परिकरैः ध्यायन् सम्प्रार्थयेद्धरिम्
मनसा योगपूतेन निजतीर्थोक्तवर्त्मना ॥ ९५ ॥
वृन्दावने निजनिकुञ्जकदम्बके ते।
सिंहासने मणिमये निजसुन्दरीभिः॥
यः सेव्यते श्रुतिगणै रमते रमेशः।
स श्रीमदार्यकृपया मम सन्निधत्ताम् ॥ ९६ ॥
आयान्तं भावयेत्तेन करुणाभक्तिसेवितम्।
योगसंसिद्धहृत्पद्मं वासुदेवाक्षरान्वितम् ॥ ९७ ॥
स्वीयोत्तरीयसंक्लृप्तमासनं स्वीकुरु प्रभो।
इत्यर्चया महामन्त्रान् देवं पीठे च विन्यसेत् ॥ ९८ ॥
यथासुखं परिकरैरुपविष्टं विभावयेत्।
सेवाधिकारसिध्यर्थं प्रार्थयेद्वामभागतः ॥ ९९ ॥
आनन्दैकरसस्य गोकुलपतेर्वामाङ्कभागेश्वरि।
नित्ये नित्यनुते निकुञ्जनिलये भो नित्यलीलाधिपे॥
श्रीमत्या सह संवदो हरिरसौ भव्यां सपर्यामिमाम्।
कृत्वाभ्यर्हतरां निवेदय निजाचार्याननुगृह्य मे ॥ १०० ॥
निर्दोषोज्ज्वलकोटिचन्द्रमहसश्चन्द्रावली चन्द्रिका।
तस्माद्गोकुलचन्द्र एष भगवान् चिच्चन्द्रकान्तामृतैः।
देवान्पोषयते चकोरशिशुकांस्त्वं सद्वचोभिस्तुता।
सेवार्हं कुरु मां निजार्यवचसा सेवैकदानेश्वरि ॥ १०१ ॥

नानाभूषणभूषिताङ्गललिते नित्यं मुनीन्द्रैर्नुते ।
सद्भक्तागमसम्प्रदायरसिकाद्याचार्यरूपेश्वरि ।
श्रीगोपीशसमर्चनैकचतुरे सम्पादितामर्चनाम् ।
श्रीमत्या ह्यनुशासितां मम हरेः पादाब्जयोरर्पय ॥ १०२ ॥
प्रादुर्भूय निजान्विधाय वत या तीर्थात्मना भूतले ।
सम्पाद्यातिपवित्रदर्शनभरैः स्वीयोपदेशामृतैः ॥
औदार्यैकरसोदयेन जगतामुद्धर्तुकामा सदा ।
लीलानन्दकलाभिसन्धिमनसा लीलेश्वरि त्वां भजे ॥१०३॥
सम्प्रार्थ्यैवं स्नानकृतं ऽशुकादि परिधापयेत् ।
कालानुकूलतश्चारु नयेदन्ति हसन्तिकाम् ॥ १०४ ॥
आयाहि गोकुलपते परिवारवर्गैः ।
स्नानाय भानुतनयारचिते निकुञ्जे ॥
पूर्णेन्दुकान्तकमनीयतमःप्रियाभिः ।
खेलां विधातुममलैः कमलैर्जलैर्वा ॥ १०५ ॥
इति नत्वा नयेत्स्नानमण्डपे तत्र वेशयेत् ।
शुद्धपादाम्बु चादाय दद्यात्पादार्चनेजनम् ॥ १०६ ॥
ब्रह्माण्डवरणोद्भूतं ब्रह्माद्रमयं शुभम् ।
कलिन्दजे ललितया प्रापय स्वप्रियं करे ॥ १०७ ॥
शङ्करादिजटादेयं भक्तैर्भक्त्या समर्पितम् ।
प्रेमपाथोधिसत्पाथः पाद्यं स्वीकुरु पादयोः ॥ १०८ ॥
इत्युच्चार्य महामन्त्रात्पाद्यं दत्वा पुनर्ददेत् ।
वाससं प्रोञ्छ्य तत्पाद्यं पुनरादाय चार्चयेत् ॥ १०६ ॥
श्रीगोकुलेश स्वीयात्मपरिवाराय इत्यतः ।
यन्त्रे निवेदनं ह्येवं सर्वत्र करशोधनम् ॥ ११० ॥
शुद्धार्घ्यं करयोर्दत्वा विशेषार्घ्ये जलार्पणम् ।
कृत्वा समर्पयेद्भूय आशिखादि नखावधि ॥ १११ ॥

कुसुमाम्बुधिसत्पाथो हरिचन्दनचर्चितम्।
कलिन्दजासमानीतं ललिते प्रापय प्रियम्॥ ११२॥
सुगन्धैः शोभनैर्नीरैर्भक्तैरपि समर्पितम्।
अर्घोऽयं गृह्यतां नाथ राधिकाप्राणवल्लभ॥ ११३॥
इत्यर्घं पूर्ववद्दत्वा ततः शुद्धाचमं ददेत्।
पूर्वशुद्ध्यै ततः प्रीत्यै पुनश्चैवं त्रिधा भवेत्॥ ११४॥
कामधुक्स्तनसंभूतं क्षीरसागरसङ्गतम्।
हंसकन्यासमानीतं आचमं त्वं निवेदये॥ ११५॥
रत्नपात्रगतं दिव्यं शीतलामलपुष्करम्।
श्रीमन्मुखाम्बुजे नाथ आचमं स्वीकुरु प्रभो॥ ११६॥
अभ्यर्च्य पूर्ववत्सर्वं कृत्वा शुद्धाचमं चरेत्।
मधुपर्कं ततः कुर्यान्मधुदध्याज्यशर्करम्॥ ११७॥
शुद्धात्मकमनोहारि शर्कराज्यमधूद्भवम्।
मधुमत्या समानीतं मधुपर्कं समर्पये॥ ११८॥
स्वयं सर्वैः सुरैर्ग्राह्यं त्रिविधं परमामृतम्।
श्यामतापिच्छपुटके मधुपर्कं लिह प्रभो॥ ११९॥
इत्यभ्यर्च्याचमं दत्वा ततः सर्वं तु पूर्ववत्।
सुगन्धतैलामलककल्कं तप्तोदकैः प्रभो॥ १२०॥
स्नानं विधायाचमेन विधिस्नानं तु कारयेत्।
गन्धमाल्ये समाप्याथ शङ्खमादाय तद्घटात्॥ १२१॥
स्वर्णघर्मानुवाकेन घण्टाशङ्खादिवादनैः।
उत्सवेषु च दुग्धाम्बु दध्यम्बु च घृताम्बु च॥ १२२॥
मध्वम्बु शर्कराम्बु स्याच्चन्दनं स्नानमर्पयेत्।
सौभाग्यतिलकं देयं सौभाग्याक्षतमर्पयेत्॥ १२३॥
श्रीगोविन्दप्रियायै च दत्वा वृन्दादलानथ।
पीताक्षतानासनाय नमोऽस्त्विति समर्पयेत्॥ १२४॥

सप्ताश्वमण्डलाज्जातं छन्दोभिः स्तुतमुत्तमम् ।
तीर्थाम्बु सम्भृतं भव्यं स्नानाय यमुनाहृतम् ॥ १२५ ॥
वृन्दावनविहारेण श्रान्ते विश्रान्तिकारकम् ।
चन्द्रपुष्करपानीयं गृहाण पुरुषोत्तम ॥ १२६ ॥
महामन्त्रेणाभिषिच्य दत्वाचमनप्रोञ्छने ।
परिधाप्य ततो वस्त्रे नयेत् पीठान्तरे हरिम् ॥ १२७ ॥
ततोऽस्य परिवारेभ्यः स्नानं शुद्धाम्बुसम्भृतम् ।
प्रोञ्छनाचमनं वस्त्रं दत्वाथ स्वकरौ मृजेत् ॥ १२८ ॥
ततस्तु परिवाराघ्यात्पाद्यार्घे आचमाच्च तत् ।
स्नानाम्बुकलशात्स्नानं रुक्मिण्यादिषु योजयेत् ॥ १२९ ॥
अवशिष्टेन गरुडं शङ्खं चापि प्रपूजयेत् ।
समर्प्य गन्धमाल्ये च यन्त्रराजं ततो नयेत् ॥ १३० ॥
क्षालयेत्पृथु पात्रं तु पीठे सम्भृत्य योजयेत् ।
निजद्रव्यैश्चोपयुक्तैः शोधयेत्क्ष्माकरादिकम् ॥ १३१ ॥
आयाहि गोकुलपते परिवारवर्गैः ।
श्रृङ्गारमण्डपमिदं रचितं सुरत्नैः ॥
चित्राम्बराणि च विचित्रसुमण्डनानि ।
अत्रोपधारय निजाभिमतानि नाथ ॥ १३२ ॥
इत्येवं प्रार्थयन्नत्वा निवेश्य निजपीठके ।
वस्त्रभूषादिपेटिं च विमुच्याऽभ्यर्चयेद्यथा ॥ १३३ ॥
नमः साराङ्गदिव्यायै विशाखायै नमोऽस्त्विति ।
पुष्पगन्धाक्षतान् दत्वा यथर्तुविभवं ततः ॥ १३४ ॥
कौशेयक्षौमचीनीयवासांस्यत्युत्तमानि ते ।
विशाखयाभिनीतानि सुरङ्गाण्युपधारये ॥ १३५ ॥
छन्दसामप्यगम्याय योगगम्यस्वरूपिणे ।
यशोदानन्दनन्दाय वस्त्रवेशं नु कल्पये ॥ १३६ ॥

इत्युक्त्वाथ महामन्त्राच्छृङ्गारं कल्पयेद्विभोः ।
ततोऽस्य परिवारेभ्यस्तन्मत्रेण समर्पयेत् ॥ १३७ ॥
विमुक्तमुक्ताभरणैर्हीरमाणिक्यगारुडैः ।
सारङ्गदीप्तयानीतैर्विभूषये निजेश्वरम् ॥ १३८ ॥
नानाशास्त्रवचोरत्नैस्तत्तद्विच्छित्तिगुम्फनैः ।
भूषणानि महार्हाणि स्वीकुरुष्व व्रजेश्वर ॥ १३९ ॥
महामन्त्रात्समर्प्याशु यथायोग्यं क्रमाद्दधेत् ।
नेत्राञ्जने सुतिलकं नासाभरणमर्प्पयेत् ॥ १४० ॥
ततः सुगन्धलेपं च मुकुरं चापि दर्शयेत् ।
त्रिविधं सर्वगन्धाढ्यं परमामोदसुन्दरम् ॥ १४१ ॥
सुगन्धं ललितानीतमङ्गरागं विलेपये ।
यशोदानन्दनन्दाय परमानन्दमूर्तये ॥ १४२ ॥
यशःसुरभि सद्गन्धं प्रभवे ते समर्पये ।
पूर्ववच्च महामन्त्रात् मालायुग्मं समर्पयेत् ॥ १४३ ॥
वृन्दावनसमुद्भूतमल्लिमाल्यादिमञ्जुला ।
हरिप्रियादलैः क्लृप्ता सुन्दरी व्रजगुम्फिता ॥ १४४ ॥
वृन्दारण्यमहेन्द्राय मालिका भक्तिपालिका ।
निवेदिता ललितया गृहाण पुरुषोत्तम ॥ १४५ ॥
पूर्ववच्च समर्प्याथो अर्पयेत्तुलसीस्रजम् ।
वेणुवेत्रे हरेरेव पूजयित्वा नमोऽस्त्विति ॥ १४६ ॥
वृन्दावनाधिदेवेश्या भङ्ग्या तच्चरणाब्जयोः ।
भक्तैः समर्पिता याने स्वीकुरुष्व स्रजं हरे ॥ १४७ ॥
षड्गुणानन्दसम्पन्नां स्वरव्रजविभूषिताम् ।
नित्यलीलाप्रियां नाथ गृहाण मुरलीमिमाम् ॥ १४८ ॥
त्रैलोक्याभयद नेत्रं गवां च त्रिदिवौकसाम् ।
गृहाण गुप्तयेऽस्माकं वेत्रं व्रजपुरन्दर ॥ १४९ ॥

इत्यर्च्याचमनं दत्वा भृङ्गारं चापि वीटकम् ।
धृत्वा निवेदयेन्मिष्टं फलपक्वान्नगोरसम् ॥ १५० ॥
करौ प्रक्षाल्य वाचम्य प्रार्थयेज्जगदीश्वरम् ।
अनन्तलीलानुकृते स्वीकृताऽनन्तविग्रह ।
लीलाविग्रहपूजार्थं अनुज्ञां नाथ नाथय ॥ १५१ ॥
वामे श्रीमति काञ्चनौघसुतनो सद्भूषणाभूषणे ।
राजद्राजतपट्टनीलवसने स्वानन्दसन्तुन्दिले ।
सेवासम्भ्रमविभ्रमैकविलसच्छ्रीनित्यसिद्धेश्वरि ।
श्रीराधे हरिवामभागरसिके मुख्यप्रिये त्वां नुमः ॥ १५२ ॥
चतुर्थ्यंतान्नमोनाम्नः कुर्यात्पूजां यथोचिताम् ।
गन्धाक्षतैः सुमनसा ताम्बूलानि समर्पयेत् ॥ १५३ ॥
दक्षे श्रीमति चन्द्रकोटिविशदे सद्भूषणाभूषणे ।
राजत्काञ्चनपट्टरक्तवसने प्राप्ते परानन्दके ॥
सेवासंभ्रमविभ्रमोत्सुकलसच्छ्रीसिद्धसिद्धेश्वरि ।
श्रीचन्द्रावलि चन्द्रिके व्रज विधोर्वृन्दाप्रिये त्वां नुमः ॥ १५४ ॥
अग्रे कोकनदप्रभेऽथ सकलैः सद्भूषणैर्भूषिते ।
राजद्राजतपट्टपीतवसने तत्सेवनानन्दिते ॥
नानासाधनसिद्धगोपमहिलापूजाधिनाथेश्वरि ।
वन्दे श्रीललिते हरेरनुमते सेवाप्रिये श्रीमति ॥ १५५ ॥
फुल्लेन्दीवरसुन्दरव्रजपते सद्भूषणैर्भूषिते ।
राजत्काञ्चनपट्टशुक्लवसने तत्सङ्गमानन्दिते ॥
स्वीयानुग्रहसिद्धगोपवनितायूथाधिपाधीश्वरि ।
नित्यं त्वां प्रणमामि सूर्यतनये कीलालकेलिप्रिये ॥ १५६ ॥
एवं वै चतुरो व्यूहान् चतुःशृङ्गेतिमन्त्रतः ।
ध्यायन्समर्चयेद्विद्वान्यथापूर्वमनुक्रमात् ॥ १५७ ॥
पूर्वपुष्प्या सदानन्दं श्रीगोपालं समर्चयेत् ।

सदक्षिणे संविदा शक्त्या चिदानन्दं प्रपूजेत् ॥ १५८ ॥
पश्चिमे भक्तिशक्त्या तु यजेत्सम्मोहनं हरिम् ।
ह्लादिन्या उत्तरे शक्त्या आनन्दानन्दमर्च्चयेत् ॥ १५६ ॥
ततः षट्कोणमूलेषु पूर्वदीक्षाक्रमाद्यजेत् ।
पराऽस्य शक्तिमन्त्रेण लीलाद्या नाममन्त्रतः ॥ १६० ॥
लीलां च भक्तिं शक्तिं च योगमायां तथा कृपाम् ।
क्रियां च ज्ञानशक्तिं च चतुर्थ्यन्तैः प्रपूजयेत् ॥ १६१
चन्द्रभागार्द्धवपुषे ऐश्वर्यगुणशालिने ।
श्रीनागदमगोपालायेति विष्णोः समर्चयेत् ॥ १६२ ॥
ललिताद्धाङ्गवपुषे स्ववीर्यगुणशालिने ।
श्रीदेवदमनोयेति यजेद्वैष्णवमन्त्रतः ॥ १६३ ॥
विशाखाद्धाङ्गवपुषे सद्यशोगुणशालिने ।
महेन्द्रदमनायात्र यजेदैन्द्रेण साधकः ॥ १६४ ॥
सुशीलाद्धाङ्गवपुषे दिव्यश्रीगुणशालिने ।
असुरघ्नाय देवाय यजेद्रक्षोघ्नसूक्ततः ॥ १६५ ॥
श्यामार्द्धवपुषे चाथ सज्ज्ञानगुणशालिने ।
खलघ्नाय च देवाय यजेद्रुद्रादिमन्त्रतः ॥ १६६ ॥
वामार्द्धवपुषे चैवं वैराग्यगुणशालिने ।
समस्तदमनायात्र नमोमन्त्रैः प्रपूजयेत् ॥ १६७ ॥
वामेऽस्य नित्यसिद्धाश्च श्रुतिसिद्धाश्च दक्षिणे ।
पुरतश्च तपःसिद्धा भक्तिसिद्धाश्च पृष्ठतः ॥ १६८ ॥
तद्दक्षिणेऽस्य पितरौ वामे गोपाः सबालकाः ।
सर्वतो वृत्तपरिधेर्गाश्च गोसूक्ततो यजेत् ॥ १६६ ॥
तत्रैव दिक्षु च सखीन् श्रीदामादीन्प्रपूजयेत् ।
सर्वोपनिषदानन्दवाहिनीं यमुनां बहिः ॥ १७० ॥
दिग्दलेषु रमारूपां रुक्मिणीमीशदिक्क्रमात् ।

भूरूपां सत्यभामाख्यामुमां जाम्बवतीं यजेत् ॥ १७१ ॥
ह्रियं सुनन्दां मित्रां च गिरं कान्तिं सुलक्ष्मणाम् ।
प्रीतिं सुभद्रां श्रद्धां च यजेत्कालिन्दिनीं पुनः ॥ १७२ ॥
देव्यो महिष्यो भक्त्यान्या यदुनाथप्रिया इति ।
वासुदेवं सत्वरूपं देवधानीं च देवकीम् ॥ १७३ ॥
शेषं बलमविद्यां च सुभद्रामपि चार्चयेत् ।
दानवं क्रूरनामानं ज्ञानमौपगविं यजेत् ॥ १७४ ॥
सद्धर्मं सात्विकं चाथ राजधर्मं च फाल्गुनम् ।
तत्र भाग्यवतः सर्वान् द्वारकावासिनः स्मरेत् ॥ १७५ ॥
देवान्वै यादवान्ध्यायेत् देवमर्चेद्दलान्तिके ।
ततस्तु वृत्तदिक्ष्वर्चेत् बहुलाश्वं महीपतिम् ॥ १७६ ॥
श्रुतदेवं नारदं च कृष्णद्वैपायनं गुरुम् ।
चतुर्वेदात्मकं कोणे यजेद्दामचतुष्टयम् ॥ १७७ ॥
वृत्तान्तरे दिक्क्रमेण तत्वरूपायुधाष्टकम् ।
ततस्तृतीयवृत्तेऽत्र कोणेष्वथ नगान्यजेत् ॥ १७८ ॥
मन्दारमथ सन्तानं पारिजातं च चन्दनम् ।
स्वकार्योपाधिसंयुक्तं दिक्षु व्यूहचतुष्टयम् ॥ १७९ ॥
भूपुरे दिक्पतीनिष्ट्वा बाह्याधारं खगेश्वरम् ।
सर्वाधारं महानागं मायां वै सर्वगां यजेत् ॥ १८० ॥
व्रजेशमिथुनं चात्र गन्धपुष्पाक्षतैर्यजेत् ।
नत्वा हस्तौ च प्रक्षाल्य शुद्धाचमनमाचरेत् ॥ १८१ ॥
गत्वा समीपं श्रीशस्य दत्वाचमनवीटके ।
धूपमुद्धूपयेन्नीचैश्चन्दनागुरुचूर्णकैः ॥ १८२ ॥
कर्मणामधिदेवाय देवदेवाय शार्ङ्गिणे ।
वानस्पत्यः सुधूपोऽयं ललिते प्रतिपादय ॥ १८३ ॥
धाम्ना मोहनकृद्भेदी गन्धाष्टकसमन्वितः ।

अब्रह्मघ्नः सुधूपोऽयं गृह्यतां गोकुलेश्वर ॥ १८४ ॥
महामन्त्रात्समर्प्याथ घण्टावाद्यपुरःसरम्।
वर्त्यैन्दुगर्भया दीपमेवमुच्चैर्निवेदयेत् ॥ १८५ ॥
उद्दीप्तरत्नजालांशु प्रियाभूषणभासुरम्।
ब्रह्मज्योतिरिदं ज्योतिर्दर्शयस्व हरिप्रिये ॥ १८६ ॥
निजाङ्घ्रिनखचन्द्रांशुमालालूनान्तरन्तमाः।
सुदीपो दर्शितो देव्या दामोदर गृहाण तम् ॥ १८७ ॥
पुनराचमनं दत्वा गन्धपुष्पैः समर्चयेत्।
आपादतलमारभ्य प्रत्यङ्गं प्रति भूषणम् ॥ १८८ ॥
स्वस्वरूपगुणैर्युक्तं गोपालं भक्तवत्सलम्।
दद्यान्मिष्टफलान्यत्र ताम्बूलकं स्रजं नवम् ॥ १८९ ॥
ततः शृङ्गारपीठाच्च नयेच्छ्रीराजमण्डपम्।
भो भो भक्तजनानन्द नन्दनन्द कृपानिधे ॥ १९० ॥
मदीयसेवासिध्यर्थं व्रज श्रीराजमन्दिरम्।
मालामत्र नयेदस्मात्ततः श्रीललिताज्ञया ॥ १९१ ॥
भो विशाखे महाभागे श्रीसारङ्गे हरिप्रिये।
शृङ्गारदासिकावर्गं स्वस्थानं प्रति यापय ॥ १९२ ॥
इत्येवं तु नयेत्सर्वं घण्टाशङ्खाचमैर्विना।
स्थानं प्रक्षाल्य संप्रोक्ष्य करौ पादौ च मार्जयेत् ॥ १९३ ॥
वामे शृङ्गारपीठं च सयन्त्रं सोपमूर्तिकम्।
दक्षिणे गुरुपीठं च स्वस्वपात्रैर्निवेशयेत् ॥ १९४ ॥
विशेषाम्बुघटात्पूर्वं पानीयाचमनीयकम्।
शुद्धाम्बुकलशात्कुर्यात् वर्तुलं मण्डलत्रयम् ॥ १९५ ॥
गुरुपीठाग्रतश्चैकं चतुष्कोणं तथा परम्।
काष्ठपीठं ततः शुद्धं विन्यस्य पुरतो हरेः।
यशोदां प्रार्थयेत्पश्चाल्ललितोक्तिमुदाहरन् ॥ १९६ ॥

श्रीनन्दराजदयिते दयतां मम प्रि—
याशसते तव सुतो जनकेन सार्द्धम् ॥
भोक्तुं च षड्विधरसैर्नवभोज्यभक्ष्य—
चोष्यावलेह्यविधिभिर्विदधन्मुदं ते ॥ १६७ ॥
आयान्तीं भावयेत्तत्र धृतभोजनपात्रिकाम् ।
स्नेहार्द्रां परमापीच्यां भूषितां सर्वमङ्गलाम् ॥ १६८ ॥
पक्वान्नं परमं स्वादु नवं शुद्धं रहःकृतम् ।
धृत्वाऽस्य दोषनिर्मुक्त्यै कुर्याच्छङ्खदलोदकम् ॥ १६६ ॥
गोभ्यो ग्रासं ततो दद्यात् करौ संशोधयेत्ततः ।
मण्डले हवनीयाग्निकोणे गोगोपगोपिकाम् ॥ २०० ॥
व्रजेशवल्लभा ध्येया यज्ञपत्न्यश्च पट्टके ।
पात्रे ब्रह्मसुधान्नं च नन्दाज्ञां च विभावयेत् ॥ २०१ ॥
स्वयं नन्दनन्दः सदानन्दरूपो
यशोदायशोदो नवेन्दीवराभः ॥
स्वकीयप्रियाभिः स्वकीयानुरूप
स्वकीयाभिरुच्या प्रभो भुज्यतां भोः ॥ २०२ ॥
इति संप्रार्थयेद्देवं दध्यात्तन्मण्डलान्तरे ।
चतुष्कोणेऽवशिष्टान्नं पात्रं धृत्वाचमं ददेत् ॥ २०३ ॥
अन्नं हविः सुधापूर्णं रत्नपात्रेषु संभृतम् ।
क्लृप्तं चम्पकवल्ल्येतत् ललिते हरयेऽर्पय ॥ २०४ ॥
यथैव यज्ञपत्नीनां यया गिरिमखे प्रभो ।
भुक्तं प्रीत्या नवं हव्यं तथैतत्स्वीकुरु प्रभो ॥ २०५ ॥
महामन्त्रात्समर्प्यैतत् तिरस्करणिकां चरेत् ।
बहिः प्रक्षाल्य पत्पाणिमाचम्यान्तर्व्रजेदथ ॥ २०६ ॥
परिविष्य पुनः किञ्चित्कुर्याद्वै पात्रिकात्रयम् ।
मण्डलं रचयेत्तत्र दत्वाचमनमर्पयेत् ॥ २०७ ॥
श्रीमन्नन्दकुमारस्य प्रसादं सुमनोहरम् ।
मया निवेदितं भक्त्या स्वीकुर्वन्तु हरेः प्रियाः ॥ २०८ ॥

इत्येवं नित्यसिद्धाभ्यो लक्ष्म्यादिभ्योऽपि चार्पयेत्।
परिवाराचमान्तेऽथ भक्तेभ्योऽस्य समर्पयेत् ॥ २०९ ॥
श्रीमन्नन्दनिकेतने निजजनैः संभोजनीयैः प्रभु—
भुंजन् भव्यसुधारसं सुकुतुकाच्छाकान्नपाकादिकम् ॥
भक्तेभ्यः प्रददाति चातिहसते संसाहयन् स्वप्रिया—
गोपीभिः परिवीजितो विजयते कुर्वन् जनन्या मुदम् ॥२१०॥
ध्यात्वैवं च स्तुवेत्स्तोत्रैरुपपीठं बहिर्नयेत्।
पाकशालासु नन्दस्य वैश्वदेवं विभावयेत् ॥ २११ ॥
पाकाग्निं तं प्रतिष्ठाप्य स्थण्डिले गुरुसन्निधौ।
नमो वैश्वानरायेति नमेत्तं गुरुरूपिणम् ॥ २१२ ॥
सर्वापराधहरण भक्तिमार्गैकपावन।
देवानन्द स्वधास्वामिन् वैश्वानर नमोऽस्तु ते ॥ २१३ ॥
नमो ब्रह्मण इत्यर्चेद् गायत्र्या दशधा हुनेत्।
अग्नये भूतपतये इति विष्णुं स्वमन्त्रतः ॥ २१४ ॥
हुत्वा द्वादशधा मिष्टमाचमं गुरवेऽर्पयेत्।
तच्छंयोरिति सम्प्रोच्य ताम्बूलं च स्रजं दधेत् ॥ २१५ ॥
चत्वारिश्शृङ्गामन्त्रेण कुर्याद्ध्यात्वा विसर्ज्जनम्।
ततः संशोधयेत्पाणिं जयशब्दं समुच्चरन् ॥ २१६ ॥
शुद्धभृङ्गारकं नीत्वा विशेद्भोजनमण्डपम्।
करे कृत्वैव पानीयं नयेत् तस्यास्यसन्निधौ ॥ २१७ ॥
कलिन्दजासमातीतं श्रीमच्चित्रावलि प्रिये।
श्रीव्रजेशस्य पानीयमुपकल्पय शारदम् ॥ २१८ ॥
स्वच्छमुक्ताफलाभासं स्वातिजं स्वादुशीतलम्।
पानीयं रत्नपात्रस्थं गृहाण व्रजजीवन ॥ २१९ ॥
इत्युक्त्वाथ महामन्त्रात् दत्वाथ परिवारके।
ततः शुद्धाम्बु चादाय उत्तरापोशनं ददेत् ॥ २२० ॥

पतद्ग्रहान्तरे तूर्णं करशुद्धिं विभावयेत् ।
जलेन चन्दनेनापि गण्डूषानिन्दुखण्डकैः ॥ २२१ ॥
संशोध्य प्रभुपात्राणि पादशुद्ध्याचमांशुकम् ।
विशेषाम्बु च दत्त्वैवं ताम्बूलाचमनैर्यजेत् ॥ २२२ ॥
ततोऽस्यात्मप्रियादिभ्यः शुद्धिर्देया स्वपात्रतः ।
एवं ताम्बूलसम्भुक्तौ ललिताज्ञामुदाहरेत् ॥ २२३ ॥
भो नन्दालयदासीनां यूथ चम्पकवल्लिक ।
राजभोगोपकरण नयनाज्ञामुदाहर ॥ २२४ ॥
इति नीत्वा पुनः कार्या स्थानशुद्धिर्यथोचिता ।
निजशुद्धिं विधायाथ कुर्याच्च सुरभी करौ ॥ २२५ ॥
सुगन्धैः खादिरैश्चूर्णैः क्रमुकैस्तु दलैर्हरेः ।
वीटकं चारु रचयेच्छ्रीमुखेऽर्थात् निवेदयेत् ॥ २२६ ॥
नागवल्लिदलैश्चारुसुगन्धैः क्रमुकादिभिः ।
आरञ्जनं जयाक्लृप्तं वीटकं राधिकेऽर्पय ॥ २२७ ॥
स्वप्रियाधररागेण रक्तं सिक्तं सुधारसैः ।
ताम्बूलचर्वणं कृत्वा देहि नाथ प्रियाजने ॥ २२८ ॥
महामन्त्रान्निवेद्यवं चर्चितं च पतद्ग्रहे ।
परिवारे ततो दद्यात् पाणिं प्रक्षालयत्ततः ॥ २२९ ॥
मालावीटकभृङ्गारयुगं वेणुं च वेत्रकम् ।
पृथुपात्रं च संशोध्य राजपीठे हरेरथ ॥ २३० ॥
भृङ्गारकं च मालाश्च पृथुलं वीटकं गुरोः ।
भृङ्गारपीठेऽप्येतद्धि नयेच्छेषं यथोचितम् ॥ २३१ ॥
वामतः शयनागारे शय्यां तदुपचारकैः ।
अलङ्कृत्य नयेत्तत्र चामरादर्शच्छत्रके ॥ २३२ ॥
उद्घाट्य मन्दिरद्वारमाहूय भगवज्जनान् ।
मालां मुरलिकां दत्वा कुर्यादारार्तिकोत्सवम् ॥ २३३ ॥

अलङ्कृत्य निजात्मानं रङ्कञ्चाद्यलङ्कृतम्।
कर्पूरवर्तिकं कुर्यात्तौर्यत्रिकमहोदयैः॥ २३४॥
मण्डले विधिमभ्यर्च्य पात्रे व्रज वांयुशुभम् (?)।
दीपे भक्तागमं नत्वा अग्रे पीठे निवेदयेत्॥ २३५॥
अमङ्गलानां शमनं मङ्गलानां महोदयम्।
व्रजाङ्गनानां सौभाग्यमारार्तिकमिदं हरे॥ २३६॥
महामन्त्रात्समभ्यर्च्य उत्तमाधममध्यतः।
नवधा नवधा कुर्याद्घण्टावाद्यैर्महास्तवैः॥ २३७॥
बहिर्धृत्वा करौ शोध्यौ भ्रामयेत्सजलं दरम्।
त्रिधैव गरुडं सिक्त्वा सिञ्चेत्स्वं भगवज्जनम्॥ २३८॥
करौ प्रक्षाल्य च ततः शय्यामन्दिरमाव्रजेत्।
नत्वाथ विरजां कृत्वा शय्यां परममङ्गलाम्॥ २३९॥
सुगन्धां कोमलां श्लक्ष्णां लिको(?)च्छीर्षप्रच्छदाम्।
मुक्तासुदामसंनद्धां समयार्होपतूलिकाम्॥ २४०॥
कृत्वाऽस्य वामतः पीठे गन्धं माल्यं च वीटकम्।
दद्यान्मिष्टफलं चापि जलभृङ्गारकं ततः॥ २४१॥
दर्पणं व्यजनं चोर्ध्वं अधश्चापि पतद्ग्रहम्।
पादुके पादपीठं च पादपट्टं प्रसारयेत्॥ २४२॥
आगत्य च बहिः पाणी प्रक्षाल्य भगवत्पुरः।
पुष्पं गन्धतुलसिकां गृहीत्वास्तोत्रमुच्चरेत्॥
निवेदयेत्स्वमूलेन नत्वा चैतदुदाहरेत्॥ २४३॥

नित्यं भक्तवरार्चितोऽर्चनमिदं भक्त्या स्वशक्त्या प्रभो।
यत्किञ्चिच्च यथाकथंचिदपि ते कृत्वार्पितं पादयोः॥
तत्स्वीकृत्य कृतार्थय स्वशरणापन्नं निजोक्त्याथ माम्।
पूर्णोऽयं कुसुमाञ्जलिः पुनरपि त्वत्प्रीतिपूर्त्यै भवेत्॥२४४॥

महामन्त्रं पठेच्चाथ स्वपराधं क्षमापयेत्।

प्रदक्षिणं प्रकुर्वीत यथाशक्ति विधानतः ॥ २४५ ॥
अपराधसहस्रभाजनं भवदार्योक्तपथादपच्युतम् ।
शरणीकुरु मामुपस्थितं चरणाब्जानुगतं प्रदक्षिणे ॥
महामन्त्रेण साष्टाङ्गं प्रणमेन्मन्दिराद्बहिः ॥ २४६ ॥
गोविन्द केशव जनार्दन वासुदेव
श्रीनन्दनन्दन हरे निगमाभिगीत ॥
श्रीमत्पदाम्बुजयुगे प्रणतं प्रपन्नं
मां पाहि संसृतिभयाज्जगदेकनाथ ॥ २४७ ॥
ततः श्रीगुरवे स्तुत्वा पुष्पाञ्जल्या प्रणम्य च ।
क्षमाप्यार्चां निवेद्याथ मालामाहृत्य चार्थयेत् ॥ २४८ ॥
श्रीनन्दनन्दन हरे यशोदाप्राणवल्लभ ।
निकुञ्जमन्दिरे ह्यस्मिन्विहरस्व यथासुखम् ॥ २४९ ॥
पिधाय मन्दिरद्वारं निधाय शिरसि स्रजम् ।
प्रसादवीटकं तीर्थं गृहीत्वा स्थानमाव्रजेत् ॥ २५० ॥
ततोऽवशिष्टं माध्यान्हकृत्यं कृत्वा समागतः ।
पूजयेद्भगवद्भक्तं पाद्यार्घाचमगन्धकैः ॥ २५१ ॥
भोजयेच्च यथाशक्ति तोषयेत्संस्तुवेदपि ।
नत्वा विसर्जयेच्चाथ गुरुं गत्वाथ पूजयेत् ॥ २५२ ॥
तस्याज्ञयानुकल्पेन पादसंवाहनादिभिः ।
तत्प्रसादमनुज्ञां च लब्ध्वा स्वगृहमाव्रजयेत् ॥ २५३ ॥
हस्तौ पादौ तु प्रक्षाल्य आनीतं तीर्थमर्चयेत् ।
विभज्य स्वजनेभ्योऽथ शुचिर्मौनी स्वकैर्युतः ॥ २५४ ॥
वैश्वदेवं निवृत्याथ भुञ्जीयाद्भोजिते स्वके ।
अग्निपितृसुराणां च भक्तानामतिथिर्गवाम् ॥ २५५ ॥
ग्रासं पूर्वं भवेदत्र शेषं सर्वस्य दापयेत् ।
पत्नीशिष्यौ न सम्भोज्यौ गर्भिणीं बालकं विना ॥ २५६ ॥

बालाश्च रोगिणो वृद्धाः पूर्वं भोज्या दयास्पदाः।
भुक्त्वाचम्य मुखं हस्तौ पादौ प्रक्षाल्य यत्नतः॥ २५७॥
वीटकानि ततः प्राश्य आचम्य स्वगृहं विशेत्।
विलोकयेत्स्वशास्त्राणि पाठयेच्च पठेद्वदेत्॥ २५८॥
शयीत वा मुहूर्तं वै एवं कुर्याद्दिने दिने।
मुहूर्तद्वयतो ह्यर्वाक् दिवसस्य बहिर्व्रजेत्॥ २५९॥
कृत्वा शौचं ततः स्नात्वा कुर्यात्पुण्ड्राणि पूर्ववत्।
शुद्धाम्बुकलशं भृत्वा आदाय कुसुमादिकम्॥ २६०॥
आगत्य स्वगृहं धृत्वा कुम्भं संशोधयेत्करौ।
शङ्खघण्टास्वनेनैव बोधयेत् स्तोत्रतो हरिम्॥ २६१॥
विसृज्यान्मन्त्रजालं तु पुनः शृङ्गारमण्डपे।
शुद्धाम्बुकलशं चापि विशेषाम्बुघटं तथा॥ २६२॥
शङ्खमर्घ्यं प्रतिष्ठाप्य पुनराचमनादिकम्।
गन्धमाल्याक्षतान् धूपं दीपमारार्त्तिकादिकम्॥ २६३॥
ग्रीष्मर्तौ स्वीयमूर्तिं तु यन्त्रराजं सदा यजेत्।
पाद्यार्घ्याचमनस्नानवस्त्रगन्धाक्षतैरपि॥ २६४॥
धूपं दीपं च नैवेद्यं पानीयाचमनं पुनः।
वीटकारार्तिकं चापि कुर्यान्मुख्यार्चनं हरेः॥ २६५॥
पूर्ववद् गुरुपूजां हि स्तुतिं नुतिप्रदक्षिणे।
शयनं कारयेद्वस्त्रैर्माल्यै रम्यैर्विभूषयन्॥ २६६॥
वक्ष्यमाणप्रकारोक्त्या भावयन् राधिकेश्वरम्।
इत्थं वै सेवनं कुर्याद्दीक्षितः प्रत्यहं हरेः॥ २६७॥
स्वधर्मनिष्ठः पूतात्मा स तल्लीलामयो भवेत्।
त्रिकालं पूजनं वापि कुर्यात्समयगोचरम्॥ २६८॥
नेदृशी भावना योग्यानुग्रहेण विना गुरोः।
अशक्तस्यैककालेऽपि शालिग्रामेऽपि वा भवेत्॥ २६९॥

यन्त्रराजेन वै सार्द्धं शालग्रामं गिरीश्वरम् ।
पूजयेत्साङ्गमेवं हि सायंकाले निरङ्ककम् ।
सायं विधिं क्वचित् कुर्यान्नापद्येव न चालसात् ॥ २७० ॥

इति शाण्डिल्यसंहितायां पञ्चमे भक्तिखण्डे पूजापद्धतिपटलवर्णनं नाम चतुर्दशोऽध्यायः ॥ १४ ॥

——:o:——

## अथ पञ्चदशोऽध्यायः ।

शाण्डिल्य उवाच—

दीक्षितस्य त्रिधा कर्म नित्यं नैमित्तिकं तथा ।
काम्यं चेति पुरश्चर्या कृत्वा तदिह कथ्यते ॥ १ ॥
विशेषपूजनं कुर्याद्भोगमूर्तौ गिरीश्वरे ।
शालग्रामे च चक्रे वा तानि शृण्वन्तु भो द्विजाः ॥ २ ॥
चैत्रस्य वत्सरारम्भे द्वादश्यां दमनार्चने ।
गुरोर्जन्मदिने शुद्धे तदीयानां गुरोर्गुरोः ॥ ३ ॥
सम्प्रदायगुरोश्चापि मन्त्रप्राप्तिदिने तथा ।
गुरोः समागमे चापि महतां च समागमे ॥ ४ ॥
हरेर्जन्मदिने तस्य प्रियाणां जन्मवासरे ।
संस्कारेषु विशेषेषु कुर्यात्पूजामहोत्सवम् ॥ ५ ॥
वैशाखस्य तृतीयायां सप्तम्यां ज्येष्ठके पुनः ।
दशम्यामथ राकायां ज्येष्ठर्क्षे च प्रकीर्तितम् ॥ ६ ॥
आषाढे चापि सत्षष्ठ्यां पूर्णायां हरिवासरे ।
श्रावणैकादशीघस्रे तृतीयापूर्णिमासु च ॥ ७ ॥

नवरात्रे दशम्यां तु त्रयोदश्यादिकत्रिके ।
आश्विनस्याथ नन्दायां भद्रायां प्रान्तकत्रिके ॥ ८ ॥
कार्तिके मार्गशीर्षेऽथ सप्तमीनवमीषु च ।
पूर्णास्वमासु पौषेऽपि नन्दाभद्राजयासु च ॥ ९ ॥
माघस्यापि च पञ्चम्यामेकादश्यां समर्चनम् ।
पूर्णिमायां चतुर्दश्याममसितेऽथाप्यमादिने ॥ १० ॥
फाल्गुनैकादशीपूर्णाप्रतिपत्सु सुपूजनम् ।
पुष्पोत्सवश्चैत्रमासे माधवे चन्दनोत्सवः ॥ ११ ॥
ज्येष्ठे जलोत्सवः कार्य आषाढे तु रथोत्सवः ।
हिण्डोलकोत्सवः प्रोक्तः श्रावणे भाद्रके हरेः ॥ १२ ॥
बाल्यक्रीडोत्सवः कार्यो रासः केल्यास्तथाश्विने ।
मखोत्सवः कार्तिकेऽथ मार्गे प्रावरणोत्सवः ॥ १३ ॥
पौषे पाकोत्सवो माघे वसन्तक्रीडनोत्सवः ।
होलाक्रीडोत्सवस्तस्य फाल्गुने तु विधीयते ॥ १४ ॥
श्वेतमाल्याम्बरालेपभूषणव्यजनासनैः ।
सितनैवेद्यतोऽभ्यर्च्यः प्रसन्नार्चासु वत्सरे ॥ १५ ॥
पीतमाल्याम्बरालेपभूषणव्यजनासनैः ।
पीतनैवेद्यतो देवं नित्यार्चासु प्रपूजयेत ॥ १६ ॥
जन्मनां वासरे चाथ महतां च समागमे ।
संस्कारेषु च सर्वेषु हरेर्जन्मसु लीलया ॥ १७ ॥
वैशाखस्य तृतीयायां चन्दनाम्बरमाल्यकैः ।
मण्डनैर्नवपाकैश्च युगादिषु च पूजयेत् ॥ १८ ॥
सङ्क्रमेषु च दानीयैः पाकैरेनं समर्चयेत् ।
पर्वोत्सवेषु मध्याह्ने जपैर्होमैः सुपूजनम् ॥ १९ ॥
गङ्गायमुनयोर्जन्मदिने ज्येष्ठे जलोत्सवम् ।
मध्याह्ने पूजनं कार्यं प्रसन्नार्चा हरेरपि ॥ २० ॥

ज्येष्ठायोगे महास्नानं चन्दनोशिरवासितैः ।
शीतलैरम्बुभिः कुर्यान्नैवेद्यैश्च फलाङ्करैः ॥ २१ ॥
आषाढे रङ्गषष्ठ्यां तु पूजा रक्ताम्बरादिकैः ।
जलान्ते पूजनं कार्यं शयने हरिवासरे ॥ २२ ॥
नियमं तत्र गृह्णीयाद्यद्यदिष्टतमं भवेत् ।
व्यासपूजा च पूर्णायां सम्प्रदायगुरोरियम् ॥ २३ ॥
श्रावणैकादशीघस्रे पवित्रावासनोत्सवम् ।
गुरूक्तविधिना कुर्याद् द्वादश्यां मन्त्रपूजनम् ॥ २४ ॥
तृतीयापूर्णिमास्वस्य शृङ्गारोत्सवमाचरेत् ।
चित्ररक्ताम्बरैः पाकैर्नवरात्रे प्रपूजयेत् ॥ २५ ॥
मूलादिषु च भारत्याः स्वागमादौ प्रपूजनम् ।
नवाङ्कुरार्पणस्यार्चा दशम्यां विजयोत्सवः ॥ २६ ॥
सायंपूजां विधायैव शास्त्रपूजाप्रमाणतः ।
त्रयोदश्यां चतुर्दश्यां पूर्णायां दानकोत्सवम् ॥ २७ ॥
रक्ताऽम्बरानुलेपाद्यैर्महेभ्योऽर्चोपचारकैः ।
नन्दायां कार्तिके कुर्यादन्नकूटमहोत्सवम् ॥ २८ ॥
यावत्संभावितैः पाकैः शाकै रत्नैर्मनोहरैः ।
गिरीन्द्रं पूज्य विधिवद्गीतवाद्यैर्द्विजार्चनैः ॥ २९ ॥
स्वसुः संमाननाभ्यर्चा भद्रायां तस्य जायते ।
अष्टम्यां तु गवामर्चा द्वादश्यां तु प्रबोधनम् ॥ ३० ॥
दशम्यादिषु देवस्य कुर्याज्जागरणोत्सवम् ।
मार्गमासे वरप्राप्तिर्दिनेऽस्य व्यञ्जनोत्सवः ॥ ३१ ॥
पौषे रहस्यलीलायां कुर्यात्पाकोत्सवं शुभम् ।
माघे मदनजन्मादिर्निकुञ्जानां महोत्सवः ॥ ३२ ॥
फाल्गुने तस्य लीलाया उत्सवः श्रीपतेः शुभः ।
महोत्सवो हरेर्जन्मदिने लीलादिने हरेः ॥ ३३ ॥

तत्तल्लीलानुकरणैस्तत्र पूजां चरेद्धरेः ।
पुण्यकालविशेषेषु भवेत्पर्वोत्सवो हरेः ॥ ३४ ॥
तेषु पूजा पुरा प्रोक्ता जपहोमार्चनादिभिः ।
तदन्यदुत्सवे कुर्याद् वक्ष्यमाणं समर्चनम् ॥ ३५ ॥
कुर्याद्दमनकेऽभ्यर्चां पूर्वघस्रे समर्चनम् ।
गत्वा तरुतले कार्यं ब्रह्मघोषै रथोत्सवैः ॥ ३६ ॥
शुचिर्भूत्वा दमनकं प्राङ्मुखः श्वेतमाल्यकैः ।
गन्धधूपैश्च नैवेद्यैः कृत्वाङ्गन्यासमर्चयेत् ॥ ३७ ॥
नमो दमनकतरो नमो मदनवल्लभ ।
श्रीमन्मुकुन्दप्रीत्यर्थं पूजये त्वा नमन्नये ॥ ३८ ॥
इत्यभ्यर्च्य नयेत्पत्रं बिभ्रन् शिरसि वाग्यतः ।
शृङ्गारमण्डपं गत्वा चतुरस्रेऽष्टकोणके ॥ ३९ ॥
चतुरस्रे चतुर्व्यूहमष्टकोणे प्रियाष्टकम् ।
षट्कोणे षड्गुणेऽह्यर्वाग् मध्ये श्रीपतिमर्चयेत् ॥ ४० ॥
तदग्रतः स्वस्तिकाष्टदले पूर्णघटोपरि ।
पुष्पाणि तत्र संस्थाप्य यजेत्तन्त्रोपचारतः ॥ ४१ ॥
श्रीमाधव मधुजनितैः ।
दमनकपुष्पैः प्रियाहृतैर्यच्ये ॥
प्रतिवार्षिकसत्पूजाऽ-
पराधशान्त्यै सदानन्द ॥ ४२ ॥
एवं सायं समावाह्य प्रातर्नित्यार्चनात्परम् ।
पूर्वोक्तमण्डलेऽभ्यर्च्य महामन्त्रेण चार्पयेत् ॥ ४३ ॥
भो भो श्रीललिते कान्ते मालत्यानन्दमन्दिरे ।
ममापराधशान्त्यर्थं कुरुष्व दमनार्पणम् ॥ ४४ ॥
परमामोदमुदितमदनानन्दसुन्दरम् ।
पुष्पं दमनकस्यैतज्जगदीश गृहाण मे ॥ ४५ ॥

इत्यभ्यर्च्य प्रसन्नार्चां कृत्वाऽथ गुरवेऽर्पयेत् ।
बहिर्भक्तजनेभ्यश्च समर्प्यैवं समर्चयेत् ॥ ४६ ॥
पूजनान्ते प्रसन्नार्चा भवेत्पञ्चोपचारतः ।
प्रागुक्तविधिना होम इत्येवं दमनार्चनम् ॥ ४७ ॥
पवित्राभ्यर्चनं वक्ष्ये पूर्वं ग्रुरधिवासनम् ।
पट्टसूत्रमयान्यत्र शोभनान्यपराणि च ॥ ४८ ॥
दमनोक्तप्रकारेण प्रभवे शोभनार्पयेत् ।
नमः पवित्राभरण श्रीपतेः प्रीतिवर्धन ॥ ४९ ॥
श्रीमन्मुकुन्दप्रीत्यर्थं भवास्मद्दोषशान्तये ।
भो श्रीललित इत्यादिमहामन्त्रेण वार्पयेत् ॥ ५० ॥
ममोपरि प्रसादार्थं पवित्राणि समर्पये ।
सौवर्णपट्टकौशेयरुचिराणि नवानि भोः ॥ ५१ ॥
अर्चितानि पवित्राणि गृहाण श्रीरमापते ।
इत्येवं हि पवित्रार्चाहोमस्त्रिमधुभिः शतम् ॥ ५२ ॥
गुरुभ्यो वैष्णवेभ्यश्च अवश्यं सितयार्पयेत् ।
पर्वार्चने प्रसन्नार्चां कृत्वा देवव्रतो भवेत् ॥ ५३ ॥
भो श्रीललित इत्यादिपर्वनैवेद्यमर्पयेत् ।
शर्कराघृतसंयुक्तं सक्तु चैतन्मनोहरम् ॥ ५४ ॥
अर्पये श्रीमते देव गृहाण जगदीश्वर ।
जन्मोत्सवे विशेषार्चामहाभ्यङ्गोपचारकैः ॥ ५५ ॥
रक्तपीतांशुकालेपमाल्यभोज्यार्पणैरपि ।
मध्याह्निकं निवर्त्यैव ताम्बूलान्तं ततः पुनः ॥ ५६ ॥
पञ्चामृताम्भसा स्नानं धूपदीपनिवेदनैः ।
चतुष्कोणात्मकान्यत्र पट्ट् स्युर्वै स्नानमण्डले ॥ ५७ ॥
कृष्णां धूम्रां च सुरभीं सितां दुग्धे च नन्दिनीम् ।
मधुनि मधुरां मध्वां कुसुमां च रसां वृषाम् (?) ॥ ५८ ॥

शर्करासु रसवतीं कोणेष्विक्षुमतीं क्रियाम्
यज्ञाङ्गीं परमामर्च्य जले शुद्धोदधिं पुनः ॥ ५६ ॥
क्षीराज्यदधीक्षुरससिन्धूनिष्ट्वा महामनोः ।
वृन्दापत्त्राणि दत्वाथ संकल्पतिलकादिभिः ॥ ६० ॥
स्नापयेद्वारुणैर्मन्त्रैः कालिन्द्याः स्नानवर्त्मना ।
पञ्चामृताभिषेकोऽयं जन्मर्क्षे भगवंस्तव ॥ ६१ ॥
यशोदया समानीतं गृहाण व्रजजीवन ।
ततः शुद्धोदगन्धोदैःसम्मार्ज्याभूष्य तोषयेत् ॥ ६२ ॥
एवं कुर्याद्यथायोग्यां लीलां चापि महोत्सवे ।
चन्दनाम्बुरथ प्रेङ्खाणां दिनेष्वधिवासनम् ॥ ६३ ॥
उपरागेव्यतीपाते श्रावणेऽमासु संक्रमे ।
स्वगृह्याग्नौ त्रिमधुभिर्हवनं द्विजतर्पणम् ॥ ६४ ॥
कल्पादौ च युगादौ च मन्वादौ पुण्यवासरे ।
दानं जपार्चनं कार्यं यथर्तुदिनसम्भवम् ॥ ६५ ॥
वारानुरूपभोज्यानि शृङ्गाराणि तथा सुमैः ।
विदध्यात्क्रियमाणस्तु यथाशक्ति यथोदयम् ॥ ६६ ॥
प्राप्नुयात्परमां शुद्धिं मन्त्रान्तरसुदुर्लभाम् ।
द्वादशाक्षरमन्त्रेण पूजां चाष्टाक्षरेण वा ॥ ६७ ॥
दशाक्षरेण गायत्र्या सेवां कुर्यात्पुरोदितैः ।
एवं नैमित्तिकं नित्यं कृत्वा चैव समाहितः ॥ ६८ ॥
पौरश्चरणिकं कर्म कुर्यात्संवत्सरान्तरे ।
ब्रह्मचर्यमधःशय्या स्नानं त्रिषवणं तथा ॥ ६९ ॥
देवार्चनं जपो होमो नित्यमेव भवेदिह ।
हविष्यमन्नमश्नीयान्नक्तं वायापराह्णिके ॥ ७० ॥
पूजान्ते च जपं कुर्याद्न्यासध्यानपुरःसरम् ।
नायासेन कर्तव्यो जपः याद्विफलस्तथा ॥ ७

प्रसन्नेषु च सर्वेषु प्रसीदति हरिः स्वयम् ।
वर्णलक्षं जपेन्मन्त्रं कुर्वन् सावरणार्चनम् ॥ ७२ ॥
पुरश्चरणमेव स्यात्सौम्यं वर्णमितैश्च तैः ।
अष्टोत्तरशतैरेतैर्वाजिमेधो महामखः ॥ ७३ ॥
नातः परतरं पुण्यं ब्रह्माण्डेष्वखिलेष्वपि ।
वीरव्रतेन तत्कुर्वन् ग्रीष्मे पञ्चतपा भवेत् ॥ ७४ ॥
शीते शीताम्बुमग्नश्च वर्षास्वासारधारणमुनिः ।
स्थिरासनस्थस्तिष्ठन्वा पादाङ्गुष्ठेन वायुभुक् ॥ ७५ ॥
पर्णपुष्पफलाहारो रक्षामृद्गोमयैर्वपुः ।
पिबन् धूम्रं विलोमेन तीर्थे तीर्थे वसन् जपेत् ॥ ७६ ॥
एवं कष्टेन महता सिद्धिं प्राप्नोत्यनुत्तमाम् ।
भक्त्या केवलया वापि गुरूणां समनुग्रहात् ॥ ७७ ॥
नटैर्विटैर्गायकैश्च दूतवृद्ध्युपजीवनैः ।
पाषण्डैः पतितैः पापैर्निजधर्मपराङ्मुखैः ॥ ७८ ॥
अदीक्षितैः स्वागमस्य द्विड्भिर्देवस्य वा गुरोः ।
न संसर्गं चरेदेतैर्दोषान् सर्वान् विवर्जयेत् ॥ ७९ ॥
न सम्प्रलापं कुर्वीत परनिन्दात्मसंस्तुतिम् ।
जिह्वोपस्थादिलौल्यं च कामक्रोधादि वर्जयेत् ॥ ८० ॥
सतां सङ्गं प्रकुर्वीत शुद्धिं वाग्देहचेतसाम् ।
शुद्धैर्दिव्यैर्जनैर्गार्हैः परिचर्यां तु साधयेत् ॥ ८१ ॥
जपस्य दशमांशेन नित्यं वा हवनं चरेत् ।
घृतेन पायसेनापि मधुभिः कुसुमाम्बुजैः ॥ ८२ ॥
साकल्येन तिलैराज्यैर्गव्यैर्मिष्टफलैरपि ।
इष्टमिष्टं तथा पीतं हविष्यं तु हुनेत् शुचिः ॥ ८३ ॥
वारानुरूपवस्त्रान्नमणिपुष्पादिनाऽर्चयेत् ।
समाप्ते वा मखः कार्यो वित्तशाठ्यं न वै चरेत् ॥ ८४ ॥

तर्पणं शीतलैः शुद्धैर्नीरैर्दुग्धैः सुभैरपि।
सुगन्धवासितैः कुर्यान्मार्जनं तद्दशांशतः॥ ८५॥
विप्राणां तर्पणं कार्यं वैष्णवानां विशेषतः।
सर्वेषामभयं दद्यात्तोषयेत्स्वजनानपि॥ ८६॥
एवं कृत्वा पुरश्चर्यां काम्यं कुर्यान्महापदि।
न परार्थं निजार्थं वा वाञ्छन् भक्तिमनुत्तमाम्॥८७॥
नित्यं कुर्याद्यथाशक्ति नैमित्तं च यथोदयम्।
काम्यं कुर्याद्यथोक्तं वै नान्यथा सिद्धिरीस्पिता॥ ८८॥
वर्णलक्षात्तदर्द्धाद्वा तदर्द्धाद्वापि लक्षतः।
कार्यानुरूपतो जापं कलौ कुर्याच्चतुर्गुणम्॥ ८९॥
हवनादावशक्तस्तु जपं पञ्चगुणं चरेत्।
अत्यशक्तस्तदर्द्धार्द्धः शक्तितो वाशयेद् द्विजान्॥ ९०॥
शान्तिकं पौष्टिकं तुष्टिकरमापन्निवारणम्।
कारणं चेषणानां च निग्रहानुग्रहप्रदम्॥ ९१॥
सप्तकर्माणि काम्यानि सप्तवारेषु चाचरेत्।
वसन्तादिषु शान्त्यादि सर्वदापन्निवारणम्॥ ९२॥
वसन्तग्रीष्मशरदो हेमन्तः प्रावृडेतरः।
ऋतवः क्रमतश्चैते जायन्ते वासरे निशि॥ ९३॥
श्वेतमाल्याम्बरालेपनैवेद्याद्यैश्च शान्तिकम्।
पूजनं च घृतैर्होमैर्दूर्वाभिः सर्षपैस्तिलैः॥ ९४॥
पीतैश्च पौष्टिकैर्द्रव्यैः पायसेनानले हुनेत्।
तुष्टौ हरितद्रव्यैश्च पूजा होमः फलैरपि॥ ९५॥
आपन्निवारणे चापद्धरैर्द्रव्यैर्हुनेत्सुधीः।
पूजनं पाटलैर्दिव्यैर्मधुना वाग्नितर्पणम्॥ ९६॥
ईषणापूरणे पूजा रक्तैर्द्रव्यैर्विधीयते।
होमस्त्रिमधुभिः कार्यः कुन्दमन्दारचम्पकैः॥ ९७॥

निग्रहे कृष्णद्रव्यैश्च तिलैर्वापि हुनेदयम् ।
अनुग्रहे सर्वरागद्रव्यैः पूजा भवेद्धरेः ॥ ९८ ॥
साकल्येन हुनेदग्नौ फलैरपि सुमैरपि ।
सर्वत्रैव घृतं देयं शर्करागन्धसंयुतम् ॥ ९९ ॥
दद्यान्मिष्टफलान्यत्र तथा विप्रान् समर्चयेत् ।
चक्रपूजां चरेदत्र सद्यः कार्यसुसिद्धये ॥ १०० ॥
विशेषपूजा वाराणां मासादेश्च यथायथम् ।
चक्रपूजां प्रवक्ष्यामि स्नातः शुद्धः कृताह्निकः ॥ १०१ ॥
मण्डलं रचयेत्पूर्वमाचम्यार्चनमाचरेत् ।
विष्वक्सेनं तथा व्यासं दुर्गामथ विनायकम् ॥ १०२ ॥
मण्डलस्य यजेद्दिक्षु तदन्तःस्वासनं चरेत् ।
पुनश्च मण्डलं कार्यं निशिया (?) गोमयेन च ॥ १०३ ॥
पात्रन्यासं तत्र कुर्याच्छङ्खं वापि घटं न्यसेत् ।
आचम्य कृतविन्यासस्त्रिकोणं मण्डलं लिखेत् ॥ १०४ ॥
ब्रह्म सम्पूजयेन्मध्ये पराशक्तिसमन्वितम् ।
पूर्वकोणे यजेदीशं मायाशक्त्यादिसंयुतम् ॥ १०५ ॥
परमात्मानमात्मानं विद्याविद्यादिभिस्तयोः ।
कालकर्मस्वभावान्वै प्रधानं पुरुषं तथा ॥ १०६ ॥
यदृच्छं च यजेदग्रे षट्कोणेषु यथाक्रमम् ।
ततश्चाष्टदले पूज्या गुणा महदहङ्कृती ॥ १०७ ॥
वैकारिकस्तैजसश्च भूतादिश्च सशक्तिभिः ।
पञ्चभूतानि पूज्यानि ततो मण्डलपञ्चके ॥ १०८ ॥
दिक्पतीन्मण्डलस्याग्रे मण्डले पुरुषं परम् ।
हैरण्यमत्र ब्रह्माण्डं विराजं तत्र चार्चयेत् ॥ १०९ ॥
गर्भोदके तत्र चात्मा पूज्यो नारायणस्ततः ।
पार्श्वयोर्विष्णुमीशं च विधिं नाभिसरोरुहे ॥ ११० ॥

चतुर्दश ततो लोकान् नामभिः पूजयेदथ ।
आधारशक्तिं कूर्मं च वाराहं शेषमर्चयेत् ॥ १११ ॥
धरां च क्षीरसिन्धुं च श्वेतद्वीपं च नन्दनम् ।
यजेद्विरजया साकं ततो निःश्रेयसं वनम् ॥ ११२ ॥
स्वर्णभूम्यां चतुर्दिक्षु नन्दादीन् तस्य पूजयेत् ।
पीठपादेषु तत्राथ विधिमीशं च नारदम् ॥ ११३ ॥
विष्णुं समर्चयेदूर्ध्वं व्यापि वैकुण्ठमर्चयेत् ॥
मथुरामण्डलं तत्र वृन्दाद्या दिक्षु शक्तयः ॥ ११४ ॥
समर्च्य गोकुलं तत्र पूजयेत् गिरिपञ्चकम् ।
मध्याद्रौ स्वर्णचिद्भूमिं दिक्षु वेदान्यजेदिह ॥ ११५ ॥
श्रवणाद्यैर्यजेदत्र भक्त्यङ्गैर्भक्तिनीरजम् ।
सर्वात्मभावं मध्येऽपि प्रेम्णार्कतनयामपि ॥ ११६ ॥
यन्त्रराजोक्तदेवानां साङ्गोपाङ्गैश्च पूजनम् ।
वैदिकैर्नाममन्त्रैश्च पूर्वोक्तैः सर्वमर्चयेत् ॥ ११७ ॥
एवं पूजां चरेद्यस्तु कारयेद्वा समाहितः ।
तस्य सिद्ध्यन्ति सर्वाणि चिन्तितानि शुभानि वै ॥ ११८ ॥
कमलैर्हवनं सार्वकामिकं दिक्सहस्रकैः ।
जपार्थं पायसैः सार्द्धं घृतैः शर्करया फलैः ॥ ११९ ॥
मालत्या कमलावाप्तिः कुन्दैराप्नोति पौरुषम् ।
करवीरैः प्रतिष्ठाप्तिर्वाञ्छितार्थः सितासितैः ॥ १२० ॥
जातिभिर्जायते पुत्रो यूथीभिश्च धनागमः ।
मन्दारैर्लोकसंप्राप्तिररिप्राप्तिश्च चम्पकैः ॥१२१॥
पराभवश्च शत्रूणां राजिकातैलसर्षपैः ।
गुडूच्या रोगजातानां रोगाणां तत्तदौषधैः ॥ १२२ ॥
दृष्टिस्त्रिमधुभिर्भव्या मारी शाम्यति बिल्वकैः ।
क्रमुकैर्नारिकेलैश्च फलै रम्यैः सुमैरपि ॥ १२३ ॥

शास्त्रोक्तैरन्यद्रव्यैश्च फलं प्रोक्तं प्रजायते।
शुरसा (?) लव्यपत्राणां चम्पकानां तथा व्रुहाम् (?)॥ १२४ ॥
पूजनैः परमा शक्तिर्जायते चरमा शुभा।
नित्यं नैमित्तिकं काम्यमेवमुक्तं समर्चनम् ॥ १२५ ॥
कुर्वन्कामानवाप्नोति नात्र कार्या विचारणा ॥ १२६ ॥

इति श्रीशाण्डिल्यसंहितायां पञ्चमे भक्तिखण्डे विशेषपूजा-
पटलपद्धतिवर्णनं नाम पञ्चदशोऽध्यायः ॥ १५ ॥



## षोडशोऽध्यायः।

श्रीशाण्डिल्य उवाच—

शास्त्रान्तरेऽपि यत्प्रोक्तं चरेच्छास्त्रानुसारतः।
महतां समयश्चापि प्रमाणं वेदसम्मितम् ॥ १ ॥
अथ स्तोत्रं प्रवक्ष्यामि गुरोः स्वात्मस्वरूपिणः।
येन भक्तिपथे दिव्यः प्रसिध्यति परात्मनि ॥ २ ॥
यः श्रीपुराणपुरुषस्य मुखारविन्दात्।
संभूतभक्तिपथमाविरभूत्प्रणेतुम् ॥
साक्षात् करोति सकलां सकलात्मलीलाम्।
तं श्रीमदार्यचरणं शरणं भजेम ॥ ३ ॥
यस्याङ्घ्रिपङ्कजयुगेऽम्बुजवज्रचाप—
कौमोदकीव्रततितोरणसत्पताकाः ॥
मीनाङ्कुशध्वजयवासिसरोजकुम्भा—
स्तं श्रीमदार्यचरणं शरणं भजेम ॥ ४ ॥

यः शारदेन्दुधवलां विमलाब्जगर्भ--
वासोभिशोभिततमां निजभूषणाङ्गीम् ॥
स्वात्मेन्दिराध हरिपदां दधतेऽमृतेऽधे ।
स्तं श्रीमदार्यचरणं शरणं भजेम ॥ ५ ॥
यश्चक्रशङ्खसुगदाम्बुजभूषिताङ्गो--
यो यज्ञसूत्रकलितो ललितोर्ध्वपाण्डुः ॥
पीताम्बरस्तुलसिकाभरणेत्युदारः ।
तं श्रीमदार्यचरणं शरणं भजेम ॥ ६ ॥
वर्णाश्रमश्रमकृतैर्विविधैः स्वधर्मै-
र्दानैर्व्रतैरपि मखैः सुतपोभिरुग्रैः ॥
नाशीर्भजन्ति चरणाम्बुजमस्य हित्वा ।
तं श्रीमदार्यचरणं शरणं भजेम ॥ ७ ॥
दीनस्य हीनसकलागमसाधनस्य ।
पीनस्य पापपटलैरपि लीनबुद्धेः ॥
यस्याङ्घ्र्यधीनमनसः स्वयमेति भक्ति-
स्तं श्रीमदार्यचरणं शरणं भजेम ॥ ८ ॥
यः स्वाश्रितोद्धृतिकृते चकमेऽवतारान् ।
तीर्थात्मना ह्युपदिदेश सुभक्तिमार्गान् ॥
सद्यः स्वयं हरिरमुष्य वशीकृतश्च ।
तं श्रीमदार्यचरणं शरणं भजेम ॥ ९ ॥
निःसाधनाय चरणाम्बुजमाश्रिताय ।
सम्यक् विशोध्य कुरुते हरिसाज्जनाय ॥
यस्मात्परो न करुणावरुणालयोऽन्य-
स्तं श्रीमदार्यचरणं शरणं भजेम ॥ १० ॥
इदं गुरुवरस्तोत्रं गुरुप्रीत्यै सदा पठेत् ।
गुरुपूजाफलं प्राप्य हरिभक्तिं च विन्दति ॥ ११ ॥

इतिगुरुस्तोत्रम् ।

अथ वक्ष्ये हरिस्तोत्रं पावनं दुःखनाशनम् ।
भुक्तिमुक्तिप्रदं चान्त्ये भक्तितत्त्वार्थसङ्गतिम् ॥ १ ॥
श्रीमान् पुमान् स भगवान् निगमाभिगीतः ।
शेषाद्यशेषसुरपुङ्गवसेविताङ्घ्रिः ॥
स स्वे महिम्न्यभिरतः स्वयमाप्तकाम-
स्तस्मै नमो भगवते महते सदैव ॥ २ ॥
एकोऽप्यनेकरचनारचनात्पुरासीत् ।
सच्चित्सुखैकघनमूर्तिरमूर्तिराद्यः ॥
साम्यातिशायरहितो निजराधसा यः ।
तस्मै नमो भगवते महते सदैव ॥ ३ ॥
स्वात्मैकनिर्वृतिरसं रसितुं स्वकीय-
मानन्दमात्रममलं मिथुनं जजान ॥
तस्यानुरूपरमणे रमणात्मना यः ।
तस्मै नमो भगवते महते सदैव ॥ ४ ॥
यस्माद्बभूव वपुषा वचसा हृदापि ।
कालस्वभावकृतिविप्रकृतिः प्रपञ्चः ॥
जीवाः सुरासुरविधा मम गम्य यत्र ।
तस्मै नमो भगवते महते सदैव ॥ ५ ॥
यस्मिन्स्वधर्मचरणावरणोदितेन ।
धर्मेण तेन च हुतप्रहुतादिगेन ॥
निर्धूय कर्म समलं विमला रताःस्युः ।
तस्मै नमो भगवते महते सदैव ॥ ६ ॥
शेषाद्युपास्य विबुधैः समुपासनीयम् ।
पाद्मादिदेशिकवरैरुपदिष्टमार्गम् ॥
प्राप्नोति यं श्रुतिमतं हृदि वासुदेवम् ।

तस्मै नमो भगवते महते सदैव ॥ ७ ॥
नो यान्ति यं प्रवचनैर्हवनैस्तपोभिः।
योगप्रयोगविततैर्भजनादपेतैः ॥
पादाम्बुजाश्रयवतां श्रयणं च हित्वा।
तस्मै नमो भगवते महते सदैव ॥ ८ ॥
वज्राङ्कुशध्वजमुखैरभिरलक्षितस्य।
यत्पादपङ्कजयुगस्य सदाभयस्य ॥
तन्मूलकर्म रजसोऽस्य ग्रहस्य कर्म।
तस्मै नमो भगवते महते सदैव ॥ ९ ॥
स्नातो विरक्तिसुगणेन यशोगुणेन।
आमोदितः स्वमहिमा समलङ्कृतो यः ॥
ज्ञानामृतेन चकितश्चकितः श्रियापि।
तस्मै ममो भगवते महते सदैव ॥ १० ॥
इति श्रीमद्धरिस्तोत्रं प्रातरुत्थाय यः पठेत्।
सर्वपापविशुद्धात्मा हरिलोकं स गच्छति ॥ ११ ॥

इति हरिस्तोत्रम्।

अथ स्तोत्रवरं दिव्यं मङ्गलानां च मङ्गलम्।
श्रीनन्दनन्दनहरेः कालिन्द्या समुदीरितम् ॥ १ ॥
जय जयाजय मङ्गलश्रुति—।
गणेन्दुमुखीव्रजसंस्तुत ॥
जय जयात्मपदाम्बुजसंश्रित—।
नतसुरेन्द्रमतानुमहेन्दिर ॥ २ ॥
जय जयाजय मङ्गलमङ्गल।
विकचनीलकुशेशयसुन्दर ॥
विधूतकाश्चनकान्तनवाम्बर।
विविधभूषणभूषितभूषण ॥ ३ ॥

जय जयाजय मङ्गलमङ्गल ।
(विकचनीलकुशेशयसुन्दर ॥)
तव यदाब्जरजोऽभसिता जनाः ।
जगति मङ्गल जयन्ति शुचिप्रभाः ॥ ४ ॥
जय जयाजय मङ्गलमङ्गल ।
मुनिवरैः परिणूत्तमहोदय ॥
सकलविश्वकुलानि कुलाणुभि—
स्तव कृतानि वदन्ति मनीषिणः ॥ ५ ॥
जय जयाजय मङ्गलमङ्गल ।
जयति मङ्गलमङ्गमिदं तव ॥
तदनु मङ्गलमेव विभूषणम् ।
वर सुमाल्यमुखं विधृतं विभो ॥ ६ ॥
जय जयाजय मङ्गलमङ्गल ।
व्रजजनीव्रजमङ्ग निजव्रजम् ।
मुरलिका मुकुटं लकुटं स्रजः ।
सकलमेव विभो तव मङ्गलम् ॥ ७ ॥
जय जयाजय मङ्गलमङ्गल ।
जगति ते भवनं विपिनं गिरिः ॥
सरिदलं वचनं चरितं श्रुतम् ।
निखिल मङ्गलमस्ति न चापरम् ॥ ८ ॥
जय जयाजय मङ्गलमङ्गल ।
कुरु विभो भवमङ्गलमङ्गलम् ॥
तव मुखाम्बुजदर्शनतः परम् ।
भवति आर्य सुमङ्गलमङ्गलम् ॥ ९ ॥
इति श्रीमङ्गलस्तोत्रं हरेरद्भुतकर्मणः ।
पठेदुषसि यस्तस्य मङ्गलं ह्याग्रयामिकम् ॥ १० ॥

इति श्रीमङ्गलाष्टकम्।

अथ चारार्तिकं स्तोत्रं वक्ष्ये परमशोभनम्।
यद्गीयते ललितया वृन्दावनमहेशितुः॥ १॥
जय निगमागमगीतमहोदयश्रीव्रजराज हरे।
सच्चित्सुखघनस्वात्ममहित्वे रमसे प्रकृतिपरे॥
नित्याखण्डे सुखं निजलीलां कर्तुं दृक्प्रसरे।
यो राधसा द्विधात्मनि धत्ते पुंस्त्रीरूपवरे॥ २॥
वामांशतोऽस्य वामं नित्यायूथशतम्।
सौभाग्यैकनिकेतं स्वामिन्या विततम्-॥
जातं ततोऽन्यतोऽपि लीलानुप्रकृतम् (?)।
गोगोपालीविपिनविहारं प्रकटानन्दभृतम्॥ ३॥
फुल्लेन्दीवरसुन्दररूपं लावण्यैकधनम।
परमोदारचरित्रं कल्याणैकधनम्॥
वञ्जुलमणिमञ्जिरितुलसीशोभितयुगचरणम्।
चन्द्रकलाकलिताम्बुजकल्पं भजतां यश्शरणम्॥ ४॥
मञ्जुकरम्भास्तम्भसुजङ्घे जानुयुगे मुकुरे।
उदितारुणवाससि हरिदश्वप्रतिभोरुप्रवरे॥
काञ्चनकाञ्चीविराजिनितम्बनाभिवियच्छशी रे (?)।
त्रिवलिसरित्सङ्गमकृतशोभे लोकानन्दभरे॥ ५॥
मुद्रितसुमहेन्द्रमणिकवाटं हृत्सुषमागारम्।
मञ्जुलमण्डनरत्नहारैर्लक्ष्म्याः सुविहारम्॥
भोगिसुभोगनिभे भुजयुगले भव रक्षासारम्।
केयूरैः कटकैर्मुद्राभिर्लोकेऽभिस्फारम्॥ ६॥
स्मितहीरकचिबुकं गुरुमुक्ताकृतनासाभरणम्।
शोणसरलविराजिततिलकं भव मङ्गलकरणम्॥
मारकतोज्ज्वलकुण्डलयुगलं मकराकृतिहरणम्।
यस्याननेन्दुमण्डलमपलं ज्योतिःस्मितशरणम्॥ ७॥

छुरितालकचूडाचूडामणिबर्हापीडवरम् ।
केतकदलावतंसमनुश्रितमल्लीमाल्यभरम् ॥
यस्याम्बुजतुलसीगुञ्जालीकृतदामप्रसरम् ।
काञ्चनसूत्रसुगुम्फविचित्रं पीतनिचोलसरम् ॥ ८ ॥
मृगमदघुसृणसुशोभितलेपं विमलाञ्जनं नयने ।
ताम्बूलारुणो भाससि रे अधरे मन्दस्मितरदने ॥
दाडिमकुलाङ्कुकृतदन्तालिः स्फुरति वदि(?)दयने ।
कूजति हरेर्मुरलिका मधुरं करपल्लवशयने ॥ ६ ॥
वृन्दाविपिनरासविहारे सुरवरविटपितले ।
चिन्तामणिघटिते चुरपीठे युक्तहृदब्जदले ॥ ६ ॥
श्रुतिमुनिरूपव्रजस्त्रीयूथे विहरसि गीतकले ।
यमुनातीरे मन्दसमीरे मुखरितभृङ्गबले ॥ १० ॥
कामदुहां निवहे गोपानामनुरूपधरः ।
वर्षसि अधरसुधां निजवेणौ पूर्णानन्दभरः ॥
नृत्यसि रासे व्रजबालाभिस्तावद्रूपकरः ।
मन्मथमन्मथनिकारापीच्यां मूर्तिं वहसि वरः ॥ ११ ॥
भज भज नन्दयशोदानन्दं भज वृन्दावनकेलम् ।
भज वृषभानुसुताकृतिसङ्गिनित्यनवीनसुखेलम् ॥
भज गोविन्दं गोकुलनाथं भज धृतपीतसुचैलम् ।
भज भजतां सुरतरुजितसारं त्यज चान्यमनुवेलम् ॥
जय मङ्गलमङ्गल निजरूपैः निजमङ्गलदारैः ॥ ११ ॥
जय मङ्गलमङ्गल निजभक्तैः सुविहारैः ॥
आरार्तिकमिदं स्तोत्रं यः पठेद्धरिसन्निधौ ।
तस्याश्रये भवेत् कृष्ण इति श्रीललितोदितम् ॥ १२ ॥

इति नीराजनस्तोत्रम् ।

पीठस्तोत्रमहं वक्ष्ये श्रीशार्चाफलसिद्धये ।

येनास्य परिवाराणां देवानां स्यात्समर्च्चनम् ॥ १ ॥
चिदानन्दमयभक्तिज्ञानसौरभसम्पदी ।
कारुण्याम्बुधिसंजाते गुरुपादाम्बुजे नुमः ॥ २ ॥
शब्दार्थचरणस्तर्कमध्यो योगहृदन्तरः ।
वेदान्तवदनस्तस्मै हरये गुरवे नमः ॥ ३ ॥
षड्गुणैश्वर्यसंपन्नं हरिलीलैकसाक्षिणम् ।
प्रपन्नजनमन्दारमाचार्यं प्रणमाम्यहम् ॥ ४ ॥
भजनानन्दलब्ध्यर्थं भक्तवृन्दैरुपासितम् ।
श्रीनन्दनन्दनात्मानं वन्दे वन्दारुवत्सलम् ॥ ५ ॥
अविघ्नं कुरु मे नाथ अर्चनाज्ञां प्रदेहि मे ।
तव पादाम्बुजध्यानात्सफलं स्यात्स्वपूजनम् ॥ ६ ॥
तवैव पूजनं ह्येतत् श्रीमता वानुशासनम् ।
तवैवातः प्रसादोऽस्तु त्वदीयोऽहं सदा भवे ॥ ७ ॥
मनो भगवतेऽनन्त महापुरुषरूपिणे ।
समस्तु गुणसङ्ख्यानायां व्यक्ताय च विष्णवे ॥ ८ ॥
नमो धरायै जगतां सर्वरत्नमहेश्वरि ।
सर्वसहायै दिव्यायै विष्णुपत्न्यै नमोऽस्तु ते ॥ ९ ॥
नमः क्षीरसुधासिन्धो अग्निरुद्धाश्रयाय ते ।
विशुद्धैश्वर्यविज्ञानशालिने हरये नमः ॥ १० ॥
वैकुण्ठाय नमो नित्यं विरजायै नमो नमः ।
नन्दनाय नमो विष्णोः सुनन्दादिभ्य एव च ॥ ११ ॥
ब्रह्मणे विष्णवे चापि शिवाय रवये नमः ।
मथुरामण्डलायाथो श्रीमतेऽस्तु नमो नमः ॥ १२ ॥
नमो वृन्दे च संकेते वने कात्यायनि परे ।
मथुरे नववारे च चतुर्वारे महेश्वरि ॥ १३ ॥
योगमाये नमस्तुभ्यं गोकुलाय नमो नमः ।

नन्दाद्रये तथानन्दाद्रये कामाद्रये नमः ॥ १४ ॥
गोवर्द्धनाय चरणाद्रये नित्यं नमो नमः ।
अक्षरब्रह्मरूपायै स्वर्णभूम्यै नमो नमः ॥ १५ ॥
वेदाय ऋग्यजुःसामाथर्वज्ञानभुवे नमः ।
भक्त्यै नमस्तदङ्गेभ्यः श्रवणेभ्यो नमो नमः ॥ १६ ॥
नमः सर्वात्मभावाय प्रेम्णे नित्यं नमो नमः ।
सर्वोपनिषदानन्दरसायै सरिते नमः ॥ १७ ॥
ऐश्वर्येभ्यो नमस्तस्यानुग्रहाय नमो नमः ।
महानुभावभावाय प्रभवाय नमो नमः ॥ १८ ॥
योगसंशुद्धत्हृत्पद्मं नत्वा श्रीव्रजभृद्वधूः ।
निचोलाय नमो नित्यं पीठाय हरये नमः ॥ १९ ॥
नमो मानसगङ्गायै पानमानरतीन्दुषु ।
सरस्सु च नमश्चाथ नमः कुसुमपुष्करम् ॥ २० ॥
हरये भानवे जातपीतपुष्करयोर्नमः ।
अथेशपुष्करं नत्वा कालिन्दिन्यै नमो नमः ॥ २१ ॥
नमोऽस्तु दशकूपेभ्यस्तडागेभ्यो नमो नमः ।
नमः षोडशघट्टेभ्यो नमेत्कुण्डोनषष्टिषु ॥ २२ ॥
द्वादशेभ्यो वनेभ्यश्च ततोपवनकाननमेत् ।
नमो दशवटेभ्यश्च चतुस्तापिच्छिकाननमेत् ॥ २३ ॥
वन्दिन्यैश्च नमश्चाथ आनन्दिन्यै नमो नमः ।
प्रभुप्रियायै स्वामिन्यै वल्लभायै नमो नमः ॥ २४ ॥
खगेश्वराय मन्दाराद्यायुधेभ्यो नमो नमः ।
दामभ्यो बहुलाष्वादिभ्यो यदुभ्यो नमः ॥ २५ ॥
प्रभुप्रियायै स्वामिन्यै वल्लभायै नमो नमः ।
पार्थेभ्यश्चोद्धवादिभ्यो भक्तेभ्योऽपि नमो नमः ॥
कुशस्थलनिवासिभ्यो मन्त्रिभ्योऽपि नमो नमः ॥ २६ ॥

वसुदेवाय देवक्यै सहजाभ्यां नमो नमः।
पत्नीभ्यो महिषीभ्यश्च तत्प्रियाभ्यो नमो नमः ॥ २७ ॥
नमो यशोदानन्दाभ्यां नमो गोपालबालयोः।
यमुनायै सखिभ्यश्च गोभ्यो नित्यं नमो नमः ॥ २८ ॥
सिद्धाभ्यो दमनेभ्यश्च शक्तिभ्योऽपि नमो नमः।
स्वात्मगोपालकेभ्यश्च स्वप्रियाभ्यो नमो नमः ॥ २९ ॥
परमानन्दरूपाय श्रीनाथाय नमो नमः।
नमो निखिलगोविन्दपरिवारात्मने नमः ॥ ३० ॥
पीठस्तोत्रमिदं पुण्यं यः पठेद्वैष्णवो जनः।
ध्यायंस्तत्प्रातरुत्थाय तस्य स्यान्मनसेप्सितम् ॥ ३१ ॥

इतिपीठस्तोत्रम्।

स्तवराजं प्रवक्ष्यामि श्रीगोपालस्य भावतः।
भुक्तिमुक्तिप्रदं दिव्यं भक्तीनामभिवर्द्धनम् ॥ १ ॥
नवीननीरदश्यामो गाम्भीर्यादृष्टयगोचरः।
पीतवासानुरागेण लावण्येकपरावधिः ॥ २ ॥
सच्चिदानन्दमन्त्रैको नित्याखण्डात्मविग्रहः।
सदा सकामः सर्वात्मा निगमागमसंस्तुतः ॥ ३ ॥
द्विभुजो भुक्तिमुक्तिभ्यां वाप्या पीयूषवर्षणः।
नवकञ्जदलाक्षिभ्यां सृष्टिस्थितिकरः प्रभुः ॥ ३ ॥
भक्तिभिर्भूषितो देव आपादतलमस्तकम्।
क्रीडन्नेव सदा बालैर्गोपालो लोकपालकः ॥ ४ ॥
वेदवेत्रेण शास्ते गा लोकानुग्रहकाम्यया।
स्वानन्दे गोपिकावृन्दे वृन्दारण्ये परात्मनि ॥ ५ ॥
मन्दस्मितेन भक्तान्स्वान्हर्षयन्मोहयन्परान्।
सदात्मराधसा दासो भजतां कामधुग्धरिः ॥ ६ ॥

अक्लिष्टकर्मा निर्द्दोषो निर्गुणो निरपाश्रयः ।
अप्राकृतगुणोदारो नित्यानन्दगुणात्मकः ॥ ७ ॥
गोपीभिः श्रुतिभिर्गीतः लीलानुग्रहविग्रहः ।
लीलया योगमायां यस्तया सर्वं करोति च ॥ ८ ॥
तपसः सुकृतस्यापि योगविज्ञानयोरपि ।
भक्तेरनुग्रहस्याद्या दर्शनं ह्यस्य सत्फलम् ॥ ९ ॥
देहि तद्दर्शनं नाथ लोचने कुरु शीतले ।
संसारतापजनितमज्ञानतिमिरं हरे ॥ १० ॥
सर्वतः साधनैर्हीनं शिश्नोदरपरायणम् ।
दम्भार्थमखिलारम्भं पाहि मां करुणानिधे ॥ ११ ॥
साम्प्रतं रमसे ह्यस्मिन् व्रजे वृन्दावने वने ।
अज्ञानतिमिरान्धानामस्माकं नावभाससे ॥ १२ ॥
देहवाक्कायवृत्तीनामासुरीणां सुरेश्वर ।
न शक्यसे ह्यवस्थानं त्वयि कल्पशतैरपि ॥ १३ ॥
नचोत्पादयितुं शक्या त्वयि प्रीतः सुखात्मनि ।
प्रसादं भवतो हित्वा त्वां प्राप्तुं को भवेत्प्रभुः ॥ १४ ॥
नित्याखण्डसुखस्थस्य पूर्णकामस्य नित्यशः ।
स्वलाभपरितुष्टस्य कथं तोषो विधीयताम् ॥ १५ ॥
सर्वत्र समभावेन पश्यतः परमात्मनः ।
कया युक्त्या प्रसादः स्यात्प्रसन्नस्यैव नित्यदा ॥ १६ ॥
तथापि तस्य देवस्य लीलालीलस्य बालवत् ।
प्रसादा निजभक्तेषु प्रवर्तन्ते स्वयं प्रभोः ॥ १७ ॥
न रागो वा विरागो वा क्रीडितुः क्रीडने शिशोः ।
यथा तथा कल्पतरोः प्रसादः संश्रिते स्वयम् ॥ १८ ॥
अथवा जगतामीशे किं कुतर्कों गिरां मिते ।
विशिष्टैरुपदिष्टेऽस्मिन् वर्तना युज्यते पथि ॥ १९ ॥

कदा यशोदातनयः कदा श्रीनन्दनन्दनः।
कदा श्रीराधिकाकान्तो दीनेहां पूरयिष्यति ॥ २० ॥
यथा द्रुपदजा दीना कुन्तिका महिला यथा।
अनुग्रहीता भवता यथा मां स्वीकुरु प्रभो ॥ २१ ॥
यदि मां कुकृतिं वीक्ष्य उदास्तेऽथ भगवन्विभो।
तदा धरण्यां रुष्टायां क यामि शरणं वद ॥ २२ ॥
रङ्केण सार्वभौमस्य न शक्योपकृतिः कचित्।
तथाप्ययं मलाङ्केन तेन संभाव्यते न किम् ॥ २३ ॥
असारेऽस्मिन्नु संसारे कारागारे स्थितं जनम्।
मामुद्धर मुरारे श्रीकंसारे शरणं गतम् ॥ २४ ॥
श्रीमच्चरणराजीवरजोलिप्सुर्मुखम्पच।
सुरतं समुपासीनोऽभग्नशक्तिं भवामि भोः ॥ २५ ॥
तिर्यक्षु नाथ यादस्सु नारकेषु नरेषु वा।
जनिर्मे भ्रमतो नाथ भवतान्नासुरेषु च ॥ २६ ॥
यत्र न श्रीमतः सेवा कथा नो भक्तसंगतिः।
न तत्र मे जनिर्भूयादिति याचे पुनः पुनः ॥ २७ ॥
मनसा वपुषा वाचा नान्यं येन समाश्रये।
तथा मां कुरु कल्याण श्रीमन् श्याम मनोहर ॥ २८ ॥
विहाय सकलं विश्वं विश्वेशानपि सर्वशः।
त्वामेवाहं प्रपन्नोऽस्मि त्वमेव परमा गतिः ॥ २९ ॥
वृन्दारण्ये तरणितनयातीरजे दिव्यकुञ्जे।
पीठे चिन्तामणिवरमये वेणुमापूरयन्तम् ॥
नीलाम्भोदद्युतिमनुपमं पीतवासो वसानम्।
वन्दे मुक्ताभरणकुसुमैर्भूषितं नन्दनन्दनम् ॥ ३० ॥
स्तवराजमिमं पुण्यं श्रीकृष्णस्य परात्मनः।
भगवान् भजतोऽमुष्य वश्यो भवति भूतले ॥ ३१ ॥

इति स्तवराजः ।

इति श्रीशाण्डिल्यसंहितायां पञ्चमे भक्तिखण्डे तृतीयभागे स्तोत्रनिरूपणं नाम षोडशोऽध्यायः ।

## सप्तदशोऽध्यायः ।



शाण्डिल्य उवाच—

शान्तिकं सम्प्रवक्ष्यामि भक्तानां हितकाम्यया ।
येन प्रयुज्यमानेन सर्वा भीतिर्निवर्तते ॥ १ ॥
समुद्भूतो यदा ब्रह्मा सृष्ट्वेदमयजद्धरिम् ।
स्वाहायै पश्यतस्तस्य हेतोर्यातो यदृच्छया ॥ २ ॥
तेन यज्ञात्मना यज्ञे पुरे कृत्वा निवर्तितुम् ।
यावद्दिष्टं ततस्तावज्जग्राह शिखया शुचिः ॥ ३ ॥
तेन सम्पीतमात्रेण देवकार्ये महत्तरे ।
असूत भगवानग्निः ऋषीन् षष्टिसहस्रिणः ॥ ४ ॥
ब्रह्मणा कृपया तेभ्यः सर्वमङ्गलमङ्गलम् ।
कवचञ्च पाठितं दिव्यं यदुक्तं हरिणात्मने ॥ ५ ॥
येन गुप्ता मुनिवरा ब्रह्मघ्नै रावणादिभिः ।
अधृष्यास्तप आतस्थुः प्रीतो येभ्यो रघूत्तमः ॥ ६ ॥
प्रसादशक्तेः सम्पर्कात् पूजनाच्च मधुद्विषः ।
प्रिया बभूवुस्ते लोके तदहं वच्मि भो द्विजाः ॥ ७ ॥
कवचास्य मुनयो ब्रह्माग्नितनया मताः ।
गायत्रञ्च भवेच्छन्दो देवता श्रीपतिः स्वयम् ॥ ८ ॥
प्रसादाख्या भवेच्छक्तिः बीजं लीलाप्रियो हरिः ।
निःप्रत्यूहनिजानन्दावाप्तये विनियोजनम् ॥ ९ ॥
मूलतोऽस्य षडङ्गानि भाचक्राद्यैश्च रक्षणम् ।
तीर्थगोपादरजसा न्यासः सर्वाङ्गलैः शुचेः ॥ १० ॥

ॐ श्रीहरये नमः—

श्रीकृष्णः सर्वतः पायात् शिरः श्रीपुरुषोत्तमः ।
ललाटमक्षरः पायान्मायेशो नयने उभे ॥ १ ॥

श्रवणे भगवान् कालः नासिके कृतिमान् विभुः ।
परमात्मा च वाचं मे जीवेशो रसनां मम ॥ २ ॥
हृदयं वासुदेवो मे अहं सङ्कर्षणः प्रभुः ।
प्रद्युम्नश्च धियं पातु अनिरुद्धोऽपि मानसम् ॥ ३ ॥
भुजौ मे यादसामीशः पादौ मे कमठेश्वरः ।
मूलाधारन्तु वाराहो नृहरिर्मणिपूरकम् ॥ ४ ॥
नाभिं मे भार्गवो रामः पार्श्वे मे रघुनन्दनः ।
पृष्ठं बलः ककुद् बुद्धः कल्किः शेषं कलाधरः ॥ ५ ॥
दृष्टिं त्रिविक्रमः पातु कृतिं च कमलापतिः ।
सूत्रं सुदर्शनं पातु अनुसूत्रं महेश्वरः ॥ ६ ॥
रूपं रमापतिः पातु रसं रक्षोविनाशनः ।
गन्धं गणानामधिपः स्पर्शं मे मधुसूदनः ॥ ७ ॥
नन्दको मे नभस्तत्त्वं नभस्वन्तं गदाधरः ।
चक्रपाणिर्हुताशं मे शङ्खभृत्सलिलं सदा ॥ ८ ॥
धरां मे कमली पातु स्वरूपं रविमण्डली ।
अभिधां मे हरिः पातु सर्वतो जगदीश्वरः ॥ ९ ॥
अव्यक्तं मां हरिः पायात् व्यक्तं मां केशवो विभुः ।
मायिनं मां रमानाथो माधवः परतन्त्रगम् ॥ १० ॥
गोविन्दो मां निरानन्दं दुर्भगं विष्णुरव्ययः ।
कर्मणोऽभिमुखं देवो मधुद्विट् प्राकृतं प्रभुः ॥ ११ ॥
भूगतं वामनः पातु अन्नगं श्रीधरोऽवतु ।
रेतस्थं तु हृषीकेशः पद्मनाभोऽपि गर्भगम् ॥ १२ ॥
दामोदरश्चोदरस्थजातं सङ्कर्षणोऽवतु ।
शिशुं श्रीवासुदेवोऽव्यात् प्रद्युम्नोऽपि स्तनन्धयम् ॥ १३ ॥
मात्राऽनिरुद्धः सार्द्धं मां धात्र्यापि पुरुषोत्तमः ।
अधोक्षजश्च तातार्थैः बालैर्नरहरिः स्वयम् ॥ १४ ॥

अच्युतः क्रीडने पातु कुमारन्तु जनार्दनः ।
भुञ्जानं वा पिबन्तं वा उपेन्द्रो हसितं रतम् ॥ १५ ॥
उच्चरन्तं चरन्तञ्च शयानं श्रीपतिर्हरिः ।
रुदन्तं क्षुधितं पातु श्रीकृष्णः परिपीडितम् ॥ १६ ॥
ग्रहैर्बालग्रहैर्वापि कृत्रिमैश्च विषैः क्षतैः ।
जन्तुभिः पापकैर्हिंस्रैः पातु श्रीरघुनन्दनः ॥ १७ ॥
भूतप्रेतक्षेत्रपालैर्महोत्पातैर्महाभयैः ।
कार्मणैर्डाकिनीभिश्च पातु मां गरुडध्वजः ॥ १८ ॥
विषदंशैर्विषश्वासैर्विषसस्यैर्विषाद्रिभिः ।
विषयोगैः चोपविषैः शेषशायी सदा अवतु ॥ १६ ॥
किशोरे कमलाकान्तः पौगण्डे परमेश्वरः ।
विहरन्तं विहारेषु देवो वै विष्टरश्रवाः ॥ २० ॥
संस्कारे यज्ञभुक् पातु श्रौतस्मार्तकृतौ हरिः ।
वार्त्तायां व्यवहारे च श्रीनाथश्च पराश्रयः ॥ २१ ॥
सेवायां परवासे च सदा लाभे सदा व्यये ।
गृहकृत्येषु सर्वेषु पातु मां जगदीश्वरः ॥ २२ ॥
गृहे पातु सदा रामः बहिः पातु बलाधिकः ।
सन्धौ सभासु मार्गेषु वैकुण्ठः पातु भूतले ॥ २३ ॥
क्रीडन्तं भार्ययैकान्ते रुक्मिणीशो सदाऽवतु ।
लालयन्तमपत्यानि पातु द्वारावतीपतिः ॥ २४ ॥
पचन्तं गृहकृत्येषु हसन्तं सखिभिः पुनः ।
व्रजन्तं दुर्गभागेषु तिष्ठन्तं दुर्जनैरपि ॥ २५ ॥
शार्ङ्गधन्वा हरिः पातु विवदन्तं परैः क्वचित् ।
विद्यावादे मन्त्रवादे विवादे कलहे परैः ॥ २६ ॥
क्रियासु पौरुषे युद्धे पातु चाणूरदर्पहा ।
भुक्ताभुक्तैरमुक्तैश्च मुक्तैः शस्त्रास्त्रसञ्चयैः ॥ २७ ॥

मणिमन्त्रौषधैर्यन्त्रैस्तन्त्रैरव्याद्दिशां पतिः।
जले तु भगवान्मत्स्यः कमठश्च जले स्थले॥ २८॥
वाराहो धरणीपृष्ठे दुर्गे नरहरिर्हरिः।
जलमार्गे दुर्गमार्गे हिममार्गेऽग्निमार्गके॥ २९॥
नानाविधेषु यानेषु खगयानः सदाऽवतु।
आकाशाच्छब्दतश्चापि पातु मां परमेश्वरः॥ ३०॥
वायुतः स्पर्शतश्चापि पातु मां मुरमर्दनः।
वैश्वानरात्प्रकाशाच्च पातु मां माधवः स्वयम्॥ ३१॥
कीलालाद्रसतः पातु नरकोच्छेदको विभुः।
धराया गन्धतः पातु परमात्मा सनातनः॥ ३२॥
इन्द्रियेभ्यः क्रियाभ्यश्च पातु दैत्यनिषूदनः।
हृषीकेभ्यो गोचरेभ्यो हृषीकेशः सदाऽवतु॥ ३३॥
देवताभ्यः प्रकाशेभ्योऽप्यन्तःकरणतः प्रभुः।
आत्मनः परतश्चापि देवः पातु स्वभूः सदा॥ ३४॥
देशतः कालतश्चापि निजेच्छातोऽप्यदृष्टतः।
सर्वतोऽपि हरिः पायादुक्तानुक्तस्वरूपतः॥ ३५॥
श्रीकृष्णायेति मामूर्ध्वं गोविन्दायेति मध्यतः।
गोपीजनवल्लभाय नमः स्वाहेत्यधोऽवतु॥ ३६॥
क्लीं कृष्णाय नमश्चाग्रे ग्लौंकृष्णायेति पृष्ठतः।
श्रीकृष्णायेत्यूर्ध्वतो मां मां कृष्णायेत्यधःस्थलात्॥ ३७॥
श्रीमन्मुकुन्दचरणं शरणं मे सदा भवेत्।
तेन सार्वात्मिकी शुद्धी रक्षा भवतु सर्वतः॥ ३८॥
अहं हरेर्मम हरिः हरये सर्वमर्पितम्।
तेन मामनुगृह्णातु यशोदानन्दनन्दनः॥ ३९॥
हरिदासान् प्रपन्नं मां प्रपन्नं हरिभावुकान्।
श्रीमदार्यान् प्रपन्नं मां पातु श्रीगोकुलेश्वरः॥ ४०॥

श्रीमद्गुणानां श्रवणे श्रद्धया सक्तमानसम् ।
श्रवणं मेऽवतु श्रोत्रे मनस्तत्वश्च पातु मे ॥ ४१ ॥
कीर्त्तनं वह्निना वाच्यं स्मरणं हृदयं धियाः ।
सेवनं स्थूलगात्रं मे अर्चनं च तनुं तनूम् ॥ ४२ ॥
वन्दनं दैवतकुलं दास्ये जीवं पुनातु मे ।
सख्यं मे भजनानन्दं स्वानन्दश्चार्पणं ददेत् ॥ ४३ ॥
प्रेमस्फूर्तिं सदा मां सा करोतु भगवन्मयम् ।
येन केनाप्युपायेन अनुगृह्णातु मां हरिः ॥ ४४ ॥
ददातु भजनानन्दं भक्तिं मह्यं ददातु सः ।
दर्शनं निजलीलायाः कृपया कारयत्वथ ॥ ४५ ॥
माथुरं मण्डलं पातु पातु दिव्यं व्रजस्थलम् ।
गोकुलं गिरिराट् पातु वृन्दारण्यश्च रक्षतु ॥ ४६ ॥
श्रीराधिका स्वात्मरूपा नित्यसिद्धा व्रजेश्वरी ।
अनुगृह्णातु गृह्णातु दासीवर्गे क्वचिच्च माम् ॥ ४७ ॥
श्रीमच्चन्द्रावली दिव्यनिगमागमसंस्तुता ।
नियोजयतु मां कार्ये दासीवर्गे समाश्रितम् ॥ ४८ ॥
ललिता ललितामान्या मुनीन्द्रैर्भक्तवत्सला ।
पुनातु मां निजप्रेष्या निचये संश्रितं हिता ॥ ४९ ॥
कालिन्दिनी महाभागा भक्तवृन्दैर्नमस्कृता ।
सेवाधिकारसम्पत्तिं देहि देहि हरिप्रिये ॥ ५० ॥
यज्ञपत्न्यो हरेःपत्न्यो गोकुलस्थाश्च गोपिकाः ।
सर्वास्ताः सर्वदा मह्यं प्रसीदन्तु हरिप्रियाः ॥ ५१ ॥
श्रीयशोदा हरेर्माता मिहिरः श्रीहरेः पिता ।
बलभद्रो हरेर्भ्राता सुभद्रा श्रीहरेः स्वसा ॥ ५२ ॥
गोपाला गोपिका गावो व्रजबाला व्रजद्रुमाः ।
ये केचिद्व्रजलीलास्थास्ते सर्वे कृपयन्तु मे ॥ ५३ ॥

अविद्यां पूतनाहन्ता हन्याद् बालग्रहानपि ।
बकारिर्मम पाषण्डं नागारिर्मम कल्मषम् ॥ ५४ ॥
श्रीमद्गोवर्धनधरो देवेभ्योऽपि स रक्षतु ।
असुरेभ्यश्च कंसारिर्मुरारिः पातु सर्वतः ॥ ५५ ॥
रागेभ्यो निजभोगेभ्यः पीडाभ्योऽप्यतिपीडनात् ।
दावानलात् हरः पातु सुदर्शनविमोचकः ॥ ५६ ॥
पूर्वतः परतश्चापि दक्षिणोत्तरतस्तथा ।
ऊर्ध्वतश्चाप्यधस्ताच्च पातु ब्रह्मविमोहनः ॥ ५७ ॥
अङ्गानि सुन्दरः श्यामः प्रत्यङ्गानि मनोहरः ।
मनसा वचसा चापि पातु चीरहरः प्रभुः ॥ ५८ ॥
कालतः कृतितो दैवात्पापेभ्योऽप्यतिपीडितम् ।
भक्तापराधतः क्षीणं पातु मां खरसूदनः ॥ ५९ ॥
इन्द्रियाणाञ्च वैकल्याद्वपुषो जरयापि च ।
मृत्युनापि वै ग्रस्तं मां पातु गोकुलपालकः ॥ ६० ॥
धनधान्यसमृद्धिर्मे वृद्धिर्वा पुत्रपौत्रिकी ।
सम्पित्तिः शस्त्रशास्त्रेभ्यो जायतां भवदाश्रयात् ॥ ६१ ॥
नान्यत् किमपि वाञ्छामि नान्यत्किमपि संश्रये ।
तथा मां कुरु कल्याण इति ध्याये महाप्रभो ॥ ६२ ॥

इति श्रीमङ्गलं नामकवचम् ।

कमलापतिः कुमारेभ्यो जगौ पूर्वं (?) ।
(?) विरिञ्चिः कमलोद्भवः ॥ ६३ ॥
नानेन सदृशं किञ्चिद्वैष्णवानां हिताय वै ।
सर्वरक्षाकरं विप्राः भक्तेः सम्पत्तिदायकम् ॥ ६४ ॥
एतद्धारणतो ब्रह्मा सृष्टिं चक्रे हरिप्रियाम् ।
रजसापि न सम्बद्धो भक्तानां प्रवरो बभौ ॥ ६५ ॥
गोष्ठे सहस्रमभ्यस्य श्रीगोपालस्य सन्निधौ ।
हुत्वा मधुभिः सिद्धः पालाशैर्जायते ध्रुवम् ॥ ६६ ॥

कार्त्तिके तु पठेन्नित्यं वृन्दारण्ये विशेषतः ।
यद्वाञ्छति कल्याणं तत्तद्भक्तेः प्रयच्छति ॥ ६७ ॥
वेदनासु च घोरासु रोगे मृत्युभयेषु च ।
तुलसीमूलमृल्लिप्तः पठेदस्माद्विमुच्यते ॥ ६८ ॥
नित्यं पठन् भक्तिमान् स्यात्कामी कामानवाप्नुयात् ।
किं विप्र बहुनोक्तेन श्रद्धया सर्वमश्नुते ॥ ६९ ॥

इति श्रीशाण्डिल्यसंहितायां स्तोत्रकवचनिरूपणं नाम सप्तदशोऽध्यायः ।

---

## अथ अष्टादशोऽध्याय।

### अथ लीलाशतनामस्तोत्रम् ।

शाण्डिल्य उवाच—

अथ लीलाशतं ( स्तोत्रं ) प्रवक्ष्यामि हरेः प्रियम् ।
यस्याभ्यसनतः सद्यः प्रीयते पुरुषोत्तमः ॥ १ ॥
यदुक्तं श्रीमता पूर्वं प्रियायै प्रीतिपूर्वकम् ।
ललितायै यथाप्रोक्तं सा मह्यं कृपया जगौ ॥ २ ॥
श्रुतिभिर्यत्पुरा प्रोक्तं मुनिभिर्यत्पुरोदितम् ।
तदहं वो वर्णयिष्ये श्रद्धालून् संमतान् शुचीन् ॥ ३ ॥
लीलानामशतस्यास्य ऋषयोऽग्निसमुद्भवाः ।
देवता श्रीपतिर्नित्यलीलानुग्रहविग्रहः ॥ ४ ॥
छन्दांस्यनुष्टुप् रूपाणि कीर्त्तितानि मुनीश्वराः ।
बीजं भक्तानुग्रहकृत् शक्तिलीलाप्रियः प्रभुः ॥ ५ ॥
श्रीकृष्णभगवत्प्रीतिद्वारा स्वार्थे नियोजनम् ।
सर्वेश्वरश्च सर्वात्मा सर्वतोऽस्त्रेण रक्षतु ॥ ६ ॥
श्रीकृष्णः सच्चिदानन्दः स्वतन्त्रपरमावधिः ।

लीलाकर्त्ता बाललीलो निजानन्दैकविग्रहः ॥ ७ ॥
लीलाशक्तिर्निजलीलासृष्टिदेहो विनोदकृत् ।
वृन्दावने गोपिगोपगोद्विजादिसचिन्मयः ॥ ८ ॥
वाक्सृष्टिकर्त्ता नादात्मा प्रणवो वर्णरूपधृक् ॥ ९ ॥
प्रकृतिः प्रत्ययो वाक्यो वेदो वेदाङ्गजः कविः ।
मायोद्भवोद्भवोऽचिन्त्यकार्यो जीवप्रवर्तकः ॥ १० ॥
नानातत्वानुरूपश्च कालकर्मस्वभावकः ।
वेदानुगो वेदवेत्ता नियतो मुक्तबन्धनः ॥ ११ ॥
असुरक्लेशदो क्लिष्टजननिद्रारतिप्रदः ।
नारायणो हृषीकेशो देवदेवो जनार्दनः ॥ १२ ॥
स्ववर्णाश्रमधर्मात्मा संस्कृतः शुद्धमानसः ।
अग्निहोत्रादिपश्चात्मा स्वर्गलोकफलप्रदः ॥ १३ ॥
शुद्धात्मज्ञानदो ज्ञानगम्यःस्वानन्ददायकः ।
देवानन्दकरो मेघश्यामलः सत्वविग्रहः ॥ १४ ॥
गम्भीरोऽनवगाह्यश्रीर्द्विभुजो मुरलीधरः ।
पूर्णानन्दघनः साक्षात्कोटिमन्मथमन्मथः ॥ १५ ॥
श्रुतिगम्यो भक्तिगम्यो मुनिगम्यो व्रजेश्वरः ।
श्रीयशोदासुतो नन्दभाग्यचिन्तामणिः प्रभुः ॥ १६ ॥
अविद्याहरणः सर्वदोषसङ्घविनाशकः ।
निःसाधनोद्धारदक्षो भक्तानुग्रहकातरः ॥ १७ ॥
सर्वसामर्थ्यसहितो दैवदोषनिवारकः ।
कुमारिकानुग्रहकृद् योगमायाप्रसादकृत् ॥ १८ ॥
ब्रह्मानन्दपरानन्दभजनानन्ददायकः ।
लोकव्यामोहकृत्स्वीयानुग्रहो वेणुवादतः ॥ १९ ॥
नित्यलीलारासरतो नित्यलीलाफलप्रदः ।
मूढोद्धारकरो राजलीलासन्तोषितामरः ॥ २० ॥

सतां लोकद्वयानन्ददश्चैश्वर्यादिभूषितः ।
निरोधलीलासम्पत्तिर्दशलीलापरायणः ॥ २१ ॥
द्वादशाङ्गवपुः श्रीमाँश्चतुर्व्यूहश्चतुर्मयः ।
गोकुलानन्ददः श्रीमद्गोवर्द्धनकृताश्रयः ॥ २२ ॥
चराचरानुग्रहकृद्वंशीवाद्यविशारदः ।
देवकीनन्दनो द्वारापतिर्गोवर्द्धनाद्रिभृत् ॥ २३ ॥
श्रीगोकुलसुधानाथः श्रीमुकुन्दोऽतिसुन्दरः ।
बाललीलारतो हैयङ्गवीनरसतत्परः ॥ २४ ॥
नृत्यप्रियो युग्मलीलो त्रिभङ्गललिताकृतिः ।
आचार्यानुगृहीतात्मा करुणावरुणालयः ॥ २५ ॥
श्रीराधिकाप्रेममूर्त्तिः श्रीचन्द्रावलिवल्लभः ।
ललिताप्राणनाथः श्रीकलिन्दगिरिजाप्रियः ॥ २६ ॥
अप्राकृतगुणोदारो ब्रह्मेशेन्द्रादिवन्दितः ।
पवित्रकीर्त्तिःश्रीनाथो वृन्दारण्यपुरन्दरः ॥ २७ ॥
इतिलीलाशतं नाम्नां निजात्मकसमन्वितम् ।
यः पठेत्प्रत्यहं प्रीत्या तं प्रीणाति स माधवः ॥ २८ ॥
ईषणात्रयनिर्मुक्तो यः पठेद्धरिसन्निधौ ।
सोऽचलां भक्तिमाप्नोति इति सत्यं मुनीश्वराः ॥ २९ ॥
ईषणात्रयसम्पन्नं यस्य चित्तं प्रखिद्यति ।
तेनात्र ध्यानगम्येन प्रकारेण समाप्यते ॥ ३० ॥
पुत्रेषणासु सर्वासु ध्यायेत्पुत्रप्रदं हरिम् ।
ब्रह्माणं मोहयत्तेन वरावाप्तिः प्रजायते ॥ ३१ ॥
वित्तेषणासु वासांसि भूषणानि शिखामणिम् ।
वदन्तं विपर्यीकुर्वंल्लभते तत् स्थिरञ्च यत् ॥ ३२ ॥
लोकेषणासु नन्दस्य साधयन्परतन्त्रताम् ।
ध्यात्वा हृदि महाभाग्यो भवेल्लोकद्वये पुमान् ॥ ३३ ॥

समर्च्य भगवन्तं तं शालग्रामस्य मन्दिरे ।
नमोऽन्तैर्नामसन्मन्त्रैर्दद्याद्वृन्दादलान्यसौ ॥ ३४ ॥
निवेदयेत्ततः स्वार्थं मध्याह्ने परारात्रके ।
तेन सर्वमवाप्नोति प्रसीदति ततस्त्वमुम् ॥ ३५ ॥
सर्वापराधहरणं सर्वदोषनिवारणम् ।
सर्वभक्तिप्रजननं भावस्य सदृशं परम् ॥ ३६ ॥
एतस्यैव समासाद्य गायत्र्याख्यं महामनुम् ।
पठेन्नाम्ना सहस्रं च सुदामादिसमो भवेत् ॥ ३७ ॥
अनयोः सदृशं नास्ति प्रकारोऽत्रापरः परः ।
कामव्याकुलचितस्य शोधनाय सतां मतः ॥ ३८ ॥
न सौषधी मता पुंसां या गदान्तरमर्पयेत् ।
प्रकृतं सन्निवर्त्याघं वासनां या न संहरेत् ॥ ३९ ॥
विषयाक्रान्तचित्तानां नावेशः कर्हिचिद्धरेः ।
ततो निवृत्तिः कार्यैभ्य इत्याह तनयं विधिः ॥ ४० ॥
श्रीकृष्णेति महामन्त्रं श्रीकृष्णेति महौषधी ।
ये भजन्ति महाभागास्तेषां किं किं न सिद्ध्यति ॥ ४१ ॥

इतिलीलाशतनामस्तोत्रम् ।

इति श्रीशाण्डिल्यसंहितायां पञ्चमे भक्तिखण्डे द्वितीयभागे तृतीयो ( अष्टादशो )ऽध्यायः ॥ १८ ॥

---

## अथैकोनविंशोऽध्यायः ।

ऋषय ऊचुः—

कथं गोपीपतेर्भव्या गायत्री गृह्यते जनैः ।
किं कार्यं तैस्तदाख्याहि तथा नामसहस्रकम् ॥ १ ॥

शाण्डिल्य उवाच—

वर्णाश्रमाचारवता पुरुषेण परः पुमान् ।
आराध्यते तदा सद्यः प्रसीदति न चान्यथा ॥ २ ॥
ब्रह्मचारी गृही वानप्रस्थो यतिवरस्तथा ।

चत्वार आश्रमाश्चैते ब्राह्मणस्यैव सम्मताः ॥ ३ ॥
राजन्यस्य त्रयश्चाद्या विशो द्वौ च युगान्तरे ।
गृहाश्रमोऽपि शूद्रस्य ब्राह्मणानुगतस्य वै ॥ ४ ॥
व्रात्यापध्वंसजाः सर्वे ते भवन्ति निराश्रमाः ।
तेषां सामान्य एवास्ति धर्मो मान्यस्तु वैदिकैः ॥ ५ ॥
ब्रह्मक्षत्रविशां वक्ष्ये मौञ्जी लुप्यति चेद्यदि ।
तदैषां व्रात्यता प्रोक्ता योनिभेदाच्च सङ्करः ॥ ६ ॥
श्रूयते संस्कृतिर्येषां पूर्वेषामपि कुत्रचित् ।
तेषान्तु वैदिकी कार्या प्रायश्चितैः स्वसंस्कृतिः ॥ ७ ॥
न मातृपितृभार्यादिकुले येषां तु संस्कृतिः ।
विप्रस्यानुग्रहात् पूर्वा सङ्करे तु न सेष्यते ॥ ८ ॥
द्वादशाब्दव्रतं विप्रैर्देयं कृच्छपुरःसरम् ।
अशक्तैश्च फलाहारैस्तीर्थस्नानैश्च तन्मतम् ॥ ९ ॥
विप्रस्य ब्रह्मगायत्री क्षत्रियस्य विवस्वतः ।
वैष्णवी च विशः प्रोक्ता रौद्री सङ्करजन्मनाम् ॥ १० ॥
अथवा सर्ववर्णानां विच्युतानां स्वधर्मतः ।
श्रीपतेरेव सन्मन्त्रं परित्राणाय दृश्यते ॥ ११ ॥
स्वाश्रमाचारयुग्वापि अथवापि निराश्रमः ।
श्रीमुकुन्दं प्रपन्नो यो मुच्यते विश्वतो भयात् ॥ १२ ॥
आश्रमा वैष्णवब्राह्महराश्रमा इति त्रयः ।
तत्तल्लिङ्गानि सेवेत तत्तदाराधने जनः ॥ १३ ॥
तत्राश्रमं सदा रम्यं सात्विकं वैष्णवाभिधम् ।
यत्र वैदिकधर्मेण वैष्णवो धर्म इष्यते ॥ १४ ॥
दृष्ट्वा भागवतं विप्रं सर्वदोषविवर्जितम् ।
परिचार्य्य गुरुं कुर्यादुपदेशं ततो भजेत् ॥ १५ ॥
प्रायश्चित्तैर्व्रतैः स्नातः स्वस्तिवाचनपूर्वकम् ।

गर्भाधानादिसंस्कारानाचार्य्येणैव कारयेत् ॥ १६ ॥
नारायणैर्वासुदेवैर्नारसिंहैः परैरपि ।
जुहुयाल्लक्षसंख्याकैस्ततो ग्राह्यं मनूत्तमम् ॥ १७ ॥
अथ भूमिपतेर्वक्ष्ये विधानं जगतां मुदे ।
गोपालाराधने योग्यं योग्यं लोकस्य पालने ॥ १८ ॥
शुभे काले शुभे देशे कृत्वा भूमिपरिग्रहम् ।
मण्डपं तत्र कुर्वीत कुण्डानि च यथाविधि ॥ १६ ॥
चतुःशालं ततः कार्यं प्राकारोपवनाश्रितम् ।
प्राग्वंशं पीतपट्टेन श्रीदाम्नापि प्रशोभयेत् ॥ २० ॥
गोवर्द्धनं क्षेत्रपतिं योगमायां च द्वारपाम् ।
मध्ये वेद्यान्तु गोपालं दिग्व्यूहे व्यूहपान्यजेत् ॥ २१ ॥
बाह्यशालेषु गणपं ग्रहान्मातृपुरःसरान् ।
आधारान्तं स्वगृह्योक्तं आचार्यः स्वयमाचरेत् ॥ २२ ॥
ततोऽसौ गुरवे गत्वा साष्टाङ्गं प्रणिपत्य च ।
समानयेन्महायानैराचार्यं पूजयेदथ ॥ २३ ॥
ब्रह्मणा प्रेषितं शिष्यमाचार्यो मन्त्रसम्भृतैः ।
दीक्षोक्तवर्त्मना शुद्धं स्नापयेत् षोडशद्विजैः ॥ २४ ॥
ततः श्रीमूलगायत्र्या हुत्वा दशशतं पुनः ।
भूषितः पीतवासःस्रक्मण्डितो वाद्यघोषतः ॥ २५ ॥
आदिशेदथ गायत्रीं गुरुः सम्प्रोक्तवर्त्मना ।
वित्तार्द्धमर्पयेच्छक्त्या तोषयेच्च हरिं गुरुम् ॥ २६ ॥
देवर्षिच्छन्दसंयुक्तां षडङ्गध्यानसम्मताम्
ध्यायन् भगवतो रूपं गुरुश्चोपदिशेत्त्रिशः ॥ २७ ॥
श्रीपतेरस्य गायत्र्या देवता पुरुषोत्तमः ।
हुताशनो मुनिस्तस्याश्छन्दो गायत्र्यमिष्यते ॥ २८ ॥
हरिभक्तिप्रसिद्ध्यर्थं विनियोगः प्रकीर्त्तितः ।

श्रीगोविन्दायेति हृदि ललाटे विद्महे इति ॥ २९ ॥
शिखायां वासुदेवाय कवचं धीमहीति च ।
तन्नः कृष्ण इति स्वचूणोरस्त्रे वापि प्रचोदयात् ॥ ३० ॥
आविर्भूय प्रभामये स्ववपुषे भक्तानुकम्पारसैः ।
जीवांश्चेतयते धिया निजकृतेः सम्पादयन्यः फलम् ॥
तस्यानन्दनिधेः स्वरूपममलं स्याद्गोचरं नः सदा ।
येनास्माकमपीदृशे भगवतो रूपे भवेच्छेमुषी ॥ ३१ ॥
इति लब्ध्वा गुरोर्मन्त्रं वैष्णवीं धारयेत्स्रजम् ।
समाप्य होमशेषञ्च पूजाशेषं यथोदितम् ॥ ३२ ॥
गुरुं सम्मानयेद्भक्त्या दास्यमाजन्ममाचरेत् ।
ग्रामधामधरावृत्तिः प्रासादाराममर्पयेत् ॥ ३३ ॥
मोचयेन्निगडग्रस्तान् राजभ्यो दास्यतो ऋणात् ।
अथ सम्प्रेषयेद्यानैर्महोत्सवपुरःसरम् ॥ ३४ ॥
दारागारसुतादीनि सर्वं तस्मै निवेदयेत् ।
ततो भगवतः कुर्यादुत्सवं वैष्णवैर्जनैः ॥ ३५ ॥
सप्ताहं तत्र निवसेत्सत्रं भोज्यं प्रवर्त्तयेत् ।
महोपचारविधिना वृन्दापत्रैः सितासितैः ॥ ३६ ॥
सहस्रनाममन्त्रैश्च पूजयेत्प्रत्यहं व्रती ।
ततः समाप्य तत्सर्वमाचार्य्यं परितोषयेत् ॥ ३७ ॥
ग्रामं गजहयं गेहं गावो वृत्तिञ्च सन्तताम् ।
दासीदासधनं पूर्णं राजचिन्हानि यान्यपि ॥ ३८ ॥
एतैः पूजोपकरणैः प्रपूज्याचार्यमीश्वरम् ।
ब्राह्मणं तोषयेद्भक्त्या धनधान्यैरथापरान् ॥ ३९ ॥
भूषणैरपि वासोभिः सपत्नीकान्समर्चयेत् ।
मानयेद्विदुषो विप्रान् तापसान् कुलजानपि ॥ ४० ॥
कन्याविवाहयेत्तेषामृणानि परिमोचयेत् ।

सभ्येभ्यश्च गृहिभ्यश्च नयं दद्यान्मतिं तथा ॥ ४१ ॥
दीनान्धबधिरादिभ्यश्चान्नं वासो यथायथम्।
प्रजाभ्यः करमोक्षं च कुर्यात्किंचिद्यथारुचि ॥ ४२ ॥
गवां निरोधं भारञ्च वाहानां सुखयेज्जगत्।
सर्वान् सुखेन सम्पन्नान् वीक्ष्य विप्रांश्च भोजयेत् ॥ ४३ ॥
गवां च यवसं दद्याद् बालान्सम्भोजयेत्स्त्रियः।
ततः साम्राज्यसल्लक्ष्म्या भूषितोऽमात्यभृत्यकान् ॥ ४४ ॥
स्वसेनामपि सन्तोष्य आयान्निजगृहं नृपः।
तत्र पूर्वस्थितान् देवान् गुरुं तोष्य मुदान्वितम् ॥ ४५ ॥
स्वैः सर्वैः सह भुञ्जीत ब्रह्मचर्यं ततस्त्यजेत्।
ततश्च प्रत्यहं यन्त्रे मूर्त्तौ देवं प्रपूजयेत् ॥ ४६ ॥
यथालब्धोपचारैश्च यथासमयसम्पदा।
एवं कृत्वा महीपालः प्रजाधर्मपरायणः ॥ ४७ ॥
गोपयेद्धर्मशास्त्रेण हरिं तद्राष्ट्रमर्पयेत्।
हिंसां निवर्त्तयेत् राष्ट्रान्मद्यद्युतच्छलादिकम् ॥ ४८ ॥
मद्यमांसभुजो लोकान् पाषण्डपतितांस्तजेत्।
एवं कुर्वन्महीपालः जायते वासवोपमः ॥ ४९ ॥
पुत्रवित्तादिसम्पन्नो ह्यनुल्लङ्घितशासनः।
निरातङ्की दीर्घजीवी महिलावल्लभो युवा ॥ ५० ॥
परत्र वासुदेवस्य सारूप्यमपि गच्छति।
स्वच्छन्दचारी लोकेऽस्मिन् सदैव हरिवल्लभः ॥ ५१ ॥
इत्येवं नृपतेः प्रोक्तोऽप्यन्येषां स्वानुरूपतः।
तदाचारः पुरा प्रोक्तो व्रात्यधर्मविनिर्णयः ॥ ५२ ॥
भवेदच्युतगोत्रो वा ब्रह्मचर्यं समाश्रयेत्।
पौराणमाचमं कुर्यान्मूलबीजैश्च संहृतिः ॥ ५३ ॥

मार्जनं स्नानमन्त्रैश्च गायत्र्यार्घ्यं जपं तथा ।
उपस्थाय हरिं सूर्यं गुरुमग्निं समर्चयेत् ॥ ५४ ॥
हरिं सम्पूजयेन्नित्यं तच्चिन्हैः समलङ्कृतः ।
भिक्षाशनो विरक्तो वा एवं वर्त्तेत वा वनी ॥ ५५ ॥
वनमेवाश्रयेद्धीमान्तपी हरिपरायणः ।
भजेद्यती वा श्रीनाथं भजंस्तीर्थानि सञ्चरन् ॥ ५६ ॥
वदन् भागवतं शास्त्रं विजितात्मा त्रिदण्डभृत् ।
कुर्याद्भक्तिं हरे रम्यां तेन सिद्ध्यति सत्वरम् ॥ ५७ ॥
अथ दीनतरस्यापि उपायं वो वदामि भोः ।
स्नातः शुद्धः शुद्धिमन्तं सोपायनकरो गुरुम् ॥ ५८ ॥
विज्ञापयेत श्रीभगवन् दीनोद्धारपरायण ।
निःसाधनं कुकृतिनं मग्नं संसारवारिधौ ॥ ५९ ॥
प्रपन्नं श्रीमतः पादपद्मयोः कृपया गुरो ।
समुद्धर महाक्लेशान्मुक्तिमार्गं प्रदर्शय ॥ ६० ॥
तवास्मि करुणापूर्ण इत्युक्तोऽसो वदेदमुम् ।
हरिरेव जगत्सर्वं हरिणा निर्मितं जगत् ॥ ६१ ॥
न हरेः परमं चान्यद्वस्तुभूतं सनातनम् ।
हरेः सिसृक्षया रन्तुं जगज्जातं ततो भवान् ॥ ६२ ॥
यस्यांशः तस्य शरणं गृहाण जगदीशितुः ।
भजस्व भक्तिसंयुक्तस्ततः सिध्यसि सत्वरम् ॥ ६३ ॥
इत्युक्त्वाथ महामन्त्रं दद्यादष्टाक्षरं हरेः ।
श्रीमन्नारायणस्यैव प्रपन्नशरणं जनः ॥ ६४ ॥
शृण्वन् गृणन् गुणान् विष्णोः परिमुच्यति संसृतेः ।
नानाजन्मकृतैः पुण्यैः सात्विकानां हरौ भवेत् ॥ ६५ ॥
भक्तिस्तद्वासनाबीजमहामन्त्रे महोदये ।
इमं प्राप्य महामन्त्रं प्राप्तव्यं न परं भवेत् ॥ ६६ ॥
पीत्वाऽमृतं यथा लोके पेयं शिष्यति नापरम् ।

एतच्छ्रवणमात्रेण साक्षान्नारायणो भवेत् ॥
बहुनोक्तेन किमिह इदं गुप्तं सुरेष्वपि ॥ ६७ ॥
इति श्रीशाण्डिल्यसंहितायां पञ्चमे भक्तिखण्डे गायत्र्युपदेशो
नाम ( एकोनविंशो ) चतुर्थोऽध्यायः ॥ १९ ॥

---

## अथ विंशतितमोऽध्यायः ।

ऋषय ऊचुः—
अथ नाम्नां सहस्राख्यं वद स्तोत्रं महामुने ।
यस्याभ्यसनतः सद्यः प्रीयते पुरुषोत्तमः ॥ १ ॥
शाण्डिल्य उवाच—
पुरा कृतयुगे देवः सविता सुषुवे सुताम् ।
यमुनेति च विख्यातां देवतां च शुचिष्मतीम् ॥ २ ॥
पप्रच्छ पितरं सा च कः परो वापरो यतः ।
कथं प्राप्यो भवेदेष ततः प्राह पिता सुताम् ॥ ३ ॥
तपसा ब्रह्मणा पूर्वं जगत्सृष्टमिति श्रुतम ।
तपसा भवती देवं स्वीयं विज्ञातुमर्हति ॥ ४ ॥
सा कलिन्दगिरिं प्राप्य तपश्चक्रे सुदारुणम् ।
ध्यायन्ती रमणं देवं ब्राह्मकल्पमनीनयत् ॥ ५ ॥
ततः प्रसन्नो भगवान् श्रीकृष्णो भक्तवत्सलः ।
प्रादुर्भूय गिरौ तत्र वेणुनादं चकार सः ॥ ६ ॥
तस्य नादस्य हर्षेण द्रवीभूता ततो हि सा ।
दिव्यरूपा ततो जाता जगतां पावनी परा ॥ ७ ॥
तस्यै प्रसन्नो भगवान् नवकञ्जमयीं स्रजम् ।
सारूप्यं च ददौ प्राह प्रिया भव सुभक्तितः ॥ ८ ॥
इदं नाम्नां सहस्रं मे पठ येन विबुध्यसे
मम लोके सरिद्रूपे दिव्यरूपे प्रविश्यताम् ॥ ९ ॥

अस्मिंश्च ते द्रवे कान्ते मज्जतां भुक्तिमुक्तयः ।
भविष्यन्ति वशीभूता भक्तिर्मे न च त्वां विना ॥ १० ॥
दत्वा सहस्रनामाख्यं स्तोत्रं सख्यै हरिर्ययौ ।
विवस्वन्तमनुज्ञाप्य सा गता हरिणा सह ॥ ११ ॥
इदं स्तोत्रं मया लब्धं स्वयं तुष्टाद्विवस्वतः ।
पुण्यं स्वस्त्ययनं भव्यमायुष्यं हरिभक्तिदम् ॥ १२ ॥
पाठादस्य प्रजायन्ते पुण्याः कामा मनोगताः ।
पुत्राश्चापि प्रसूयन्ते विनीताश्चिरजीविनः ॥ १३ ॥
भाग्यवन्तः सुकृतिनः पितृभक्ता हरेः प्रियाः ।
कान्ता भवन्ति सत्कान्ता दान्ताश्चापि पतिव्रताः ॥ १४ ॥
चतुर्दश महारत्नभोक्ता भवति पाठकृत् ।
महारोगैर्विमुच्येत दारुणैर्बन्धनैरपि ॥ १५ ॥
शत्रुभिश्च विषैः शस्त्रैः कृत्याभिश्च ग्रहैरपि ।
भूतैः प्रेतैश्च रक्षोभिर्वन्हिवायुमहाभयैः ॥ १६ ॥
मुच्यते वारिधौ मज्जन् त्रायते चापरानपि ।
स्वचक्रे परचक्रे च सेनाक्षोभे प्रजाक्षये ॥ १७ ॥
महामारीभये चान्यभये वाताशने भये ।
गतं राज्यं गतां लक्ष्मीं रुद्धां वा दारुणैर्जनैः ॥ १८ ॥
साम्राज्यलक्ष्मीमाप्नोति किमन्यत् कथयामि भोः ।
दारिद्र्यान्मुच्यते सोऽथ कुबेर इव जायते ॥ १९ ॥
विद्ययाऽसौ गिरीशः स्यात् सुरेषु त्रिदशेश्वरः ।
वदान्यतां विधिः साक्षाल्लावण्यान्मदनोपमः ॥ २० ॥
महादेवान् वशे कुर्यात् भूतान्यपि वशे नयेत् ।
विपर्ययं च जगतां कुर्याद्बन्धं दिवौकसाम् ॥ २१ ॥
लोकानां रञ्जनं कुर्यान्नारीणामपि मन्मथम् ।
पूज्यते जगतीमध्ये लोकानुग्रहकृद्भवेत् ॥ २२ ॥

तस्य वाक् जायते वेत्ता भूतभव्यभवज्जुषाम्।
यद्यदिच्छति तत्सर्वं करस्थं चैव पश्यति ॥ २३ ॥
हरिभक्तस्तु भगवल्लीलां पश्यति सर्वशः।
निजदोषान् परगुणान् हरिदासे महात्मनाम् ॥ २४ ॥
दैन्यप्रीतिं समाप्नोति गुरुभक्तिं च विन्दति।
ततः कृतार्थ एव स्यान्निषेव्यः स्यान्महात्मनाम् ॥ २५ ॥
हस्तौ पादौ च प्रक्षाल्य शुचिः शुद्धात्मवासनः।
जितेन्द्रियो वाग्यतश्च पूर्वास्यः स्वासने स्थितः ॥ २६ ॥
आचम्य प्राणानायम्य कृतरक्ष्यः पठेत्ततः।
ध्यायन् भगवतो रूपं वाञ्छितार्थफलप्रदम् ॥ २७ ॥
हृदयं गोपिकानाथो भालं मे जगदीश्वरः।
श्रीकृष्णो मे शिखां पातु कवचं पातु गोपतिः ॥ २८ ॥
नेत्रे पातु दधद्वेत्रमस्त्रं वेणुधरो हरिः।
मूर्द्धादिकण्ठपर्यन्तं श्रीकृष्णः सर्वदाऽवतु ॥ २९ ॥
कण्ठादिमध्यपर्यन्तं श्रीगोविन्दोऽपि रक्षतु।
श्रीगोपीजनकान्तस्तु पायान्मध्यादिपादतः ॥ ३० ॥
श्रीमन्मुकुन्दचरणौ शरणं मेऽस्तु सर्वतः।
श्रीकृष्णः शरणं मेऽस्तु बाल्ये बालस्वरूपधृक् ॥ ३१ ॥
गोविन्दश्शरणं मेऽस्तु तारुण्ये तरुणीप्रियः।
केशवः शरणं मेऽस्तु वार्द्धक्ये वृद्धवन्दितः ॥ ३२ ॥
आपन्नं गोकुलाधीशः प्रपन्नं गिरिधारणः।
विपन्नं नन्दनन्दो मां सदा व्रजपुरन्दरः ॥ ३३ ॥
दिने कालिन्दिनीकान्तः रात्रौ श्रीराधिकेश्वरः।
सन्ध्यासु सन्धिवेलासु श्रीमच्चन्द्रावलीप्रियः ॥ ३४ ॥
अग्रतो मे जगन्नाथः पृष्ठतो बदरीपतिः।
पार्श्वतो द्वारकानाथो रङ्गनाथस्तथा हरिः ॥ ३५ ॥

इतिकवचम् ।

अथ श्रीगोपालदिव्यसहस्रनामस्तोत्रमन्त्रस्य सविता ऋषिः श्रीराधिकाधिपतिर्गोपालदेवता अनुष्टुप् छन्दः भक्तिर्बीजं लीलाशक्तिर्लोकद्धयवासनानिरसनपूर्वकश्रीकृष्णशुद्धभक्तिलब्धये विनियोगः ।

सवित्रे नमः शिरसि । श्रीराधिकेशाय नमो हृदि । अनुष्टुप् छन्दसे नमो मुखे । भक्तिप्रियाय नमो नाभौ । श्रीकृष्णभक्तये नमः सर्वाङ्गे ।

मूलेनापि गायत्र्या वा न्यासान् कुर्यात्त्रिधा पुनः ।
ततः स्वाभिमतो ध्यानं कुर्यात्कार्येषु दीक्षतः ॥ १ ॥

प्रोत्फुल्लेन्दीवराभः कमलदलसुदृग् दिव्यनीलेन्द्रकायः ।
बिभ्रत्सम्मृल्लकच्छो वरपटयुगलं चारुमायूरपिच्छम् ।
मुक्तामाणिक्यहीराद्यतुलमणिकृतैर्मण्डनैर्मण्डिताङ्गः ।
भक्तान् वेणोर्निनादैः सुखयति जयताद् गोकुलेन्दुर्मुकुन्दः ॥२॥

श्रीकृष्णः सच्चिदानन्दो गोविन्दो गोकुलेश्वरः ।
पूर्णानन्दो निजानन्दो निर्गुणो निरपाश्रयः ॥ ३ ॥
लीलाशक्तिः स्वतन्त्रात्मा सदानन्दोऽतिसुन्दरः ।
तेजोमयो द्युतिधरः लीलाशक्तिप्रवर्त्तकः ॥ ४ ॥
वामांशानन्दनो नन्दो गोविन्दो गोकुलेश्वरः ।
प्रेमरूपः प्रमेयात्मा प्रमाणं फलभृत् फलम् ॥ ५ ॥
रासलीलारसास्वादो नित्याखण्डमहोदयः ।
अचिन्त्यकार्यकरणो ह्यप्राकृतगुणालयः ॥ ६ ॥
ईश्वरो नित्यलीलश्च शुद्धाद्वैतो निराश्रयः ।
नित्यानन्दो महानन्दो सर्वानन्दो परात्परः ॥ ७ ॥
ज्ञानशक्तिः क्रियाशक्तिरिच्छाशक्तिः स्वयं प्रभुः ।
मायारूपः कालरूपः कर्मरूपः स्वभावकृत् ॥ ८ ॥

सत्वं रजस्तमःसाम्यमूलप्रकृतिरव्ययः।
गुणक्षोभो बाललीलो महत्तत्वं हिरण्मयः ॥ ६ ॥
विज्ञानं चित्तनिलयः सत्वमूर्त्तिरमूर्त्तिकः।
हिरण्यगर्भो लोकेशो विश्वलोको विराट् प्रभुः ॥ १० ॥
प्रद्युम्नः सृष्टिकर्त्ता च विकर्त्ता विकृतोऽकृतः।
आविर्भूतस्तिरोभूतो नित्याखण्डसमाधिगः ॥ ११ ॥
अहङ्कारोऽप्यहंभासस्तैजसस्त्रिगुणात्मकः।
सङ्कर्षणस्तमोरूपो रुद्रोऽननुभूतिकृत् ॥ १२ ॥
भूतादिस्तामसः क्षुब्धो जडोऽव्यक्तः प्रपञ्चकृत्।
शब्दोऽरबोधनिस्फोटो नादो बिन्दुः कला बली ॥ १३ ॥
कुण्डलीप्रणवो व्यक्तो घण्टानादो महोदरः।
स्वरः स्पर्शस्तथोष्मा च अन्तस्थो बिन्दुसर्गकः ॥ १४ ॥
उदात्तः प्रचयो दीर्घोऽनुदात्तः स्वरितः प्लुतः।
विसर्गात्मा यमो नानावर्णरूपो विकारभृत् ॥ १५ ॥
धातुः प्रकृतिराद्यश्च रूढोऽर्थः प्रत्ययोऽत्ययः।
यौगिकः शक्तिभृल्लक्ष्यो व्यञ्जकोऽर्थपदोऽपदः ॥ १६ ॥
समस्तवाक्यरूपश्च ऋग्यजुःसामगो लयः।
रागश्च संहितासन्धिर्ब्राह्मणोपनिषन्मयः ॥ १७ ॥
आकाशो निर्मलः शुद्धो ब्रह्मलिङ्गश्च जीवनः।
स्पर्शो मृदुस्तथातीक्ष्ण उष्णोऽनुष्णः सदागतिः ॥ १८ ॥
रूपं प्रकाशग्रहणस्तेजः परिणतिप्रियः।
रसं रस्यं जनं तृप्तिर्महीयान् सुरभिः शुचिः ॥ १९ ॥
भूमिभूताश्रयः सर्वगुणाध्यक्षो महत्तरः।
उद्भिजः स्वेदजश्चाण्डभवोऽपि च जरायुजः ॥ २० ॥
द्वेषजः कालजो जोष्टा जन्यश्चापि मनोभवः।
जीवश्चेतनयुग्व्यापी मनोबुद्धिरहं त्वसः (?) ॥ २१ ॥

परमात्मा हृषीकेशो योगगम्यः सनातनः ।
तैजसो विषयी वेत्ता करणं कारणः क्रमः ॥ २२ ॥
मुख्यो बाह्येन्द्रियाग्राह्यः क्रियाशक्तिः कृतक्रमः ।
दिग्वातोऽर्कः प्रचेतोऽश्वी वन्हिरिन्द्रो हरिर्गुरुः ॥ २३ ॥
मित्रो निर्ऋतिपो रुद्रो गिरीशो गिरिरीश्वरः ।
समुद्रश्चौषधीप्रीतिधरः सङ्कल्पजीवनः ॥ २४ ॥
देवोऽदेवश्च मनुजो मुनिर्मुक्तो महेश्वरः ।
क्षीराब्धिशयनो लक्ष्मीपतिः शेषकृताश्रयः ॥ २५ ॥
देवेशः सत्यसङ्कल्प आदिनारायणोऽपि च ।
ब्रह्मा रजोगुणाध्यक्षो लोकपद्मसमुद्भवः ॥ २६ ॥
अज्ञो विज्ञोऽनुग्रहीता चतुर्वक्त्रो तथोर्जितः ।
योगीश्वरो विष्णुसखो वेदगर्भो विधानकृत् ॥ २७ ॥
अविद्या सृष्टिकृद्विद्या प्रभवः सनकः सनात् ।
सनन्दनः कुमारश्च प्रतिसर्गोपसर्गकृत् ॥ २८ ॥
विसर्गलीलः सङ्क्रुद्धो रुद्रो रुद्रकरः प्रभुः ।
एकादशात्मा कालेश उमेशो गिरिशो मृडः ॥ २९ ॥
मरीचिरत्रिः पुलहः पुलस्त्यः क्रतुरूर्जितः ।
दक्षो वसिष्ठोऽपि भृगुरथर्वाङ्गिरसांपतिः ॥ ३० ॥
गौतमो नारदोऽगस्त्यः कर्दमो लोमशोऽरुणः ।
ऋषिसर्गो विसर्गात्मा देवसर्गो सुरार्दनः ॥ ३१ ॥
जलजः स्थलजो व्योमभवः पुण्यविमिश्रजः ।
स्वायम्भुवो मनुर्धीमान् शतरूपापतिः शुचिः ॥ ३२ ॥
आदिराजो महाराजो जगत्त्राणपरायणः ।
मनुष्यसृष्टिकृत् कर्त्ता कृतकृत्यः कृतात्मभूः ॥ ३३ ॥
आकूतिदेवसंहूतिप्रसूतिजठरोद्भवः ।
प्रियव्रतः सत्यव्रतो लोकातीतमहोदयः ॥ ३४ ॥

सीमाविभागकृत्सप्तसिन्धुनेमी महाबली।
मर्यादासृष्टिकृद्धिश्वजनरक्षापरायणः॥ ३५॥
पुरुषो विश्वरूपश्च सहस्रास्यः सहस्रपात्।
सहस्रबाहुः सर्वत्र सर्वं सर्वादिरच्युतः॥ ३६॥
सर्वेन्द्रियगुणाभासः सर्वतोऽक्षिशिरोमुखः।
सर्वतः श्रुतिमल्लोके सर्वसाक्षी जनार्द्दनः॥ ३७॥
सूर्यकोटिप्रतीकाशो वायुकोटिमहाबलः।
समुद्रकोटिगम्भीरो मेरुकोटिमहाचलः॥ ३८॥
कल्पद्रुकोटिफलदः कामधुक्कोटिपूजितः।
कोटिचिन्तामणिस्थानश्चन्द्रकोटिसुरञ्जनः॥ ३६॥
सुधाकोटिमहानन्दः कोटिमन्मथसुन्दरः।
कोटीन्दिरासेविताङ्घ्रिः कोटिब्रह्माण्डविग्रहः॥ ४०॥
वेदकोटिप्रगीतश्रीर्योगकोटिधृताशयः।
भक्तकोटिव्रतः श्रीमान् कोटिधैश्वर्यमङ्गलः॥ ४१॥
अनन्तोऽनन्तशीर्षेशो नागराजसमर्चितः।
नीलाम्बरो हलधरः शोणाक्षश्चैककुण्डली॥ ४२॥
नागकन्याकृताभ्यर्च्यः सनकादिसमर्चितः।
विद्याप्रवर्तको भक्तो नन्दनोऽसुरनन्दनः॥ ४३॥
श्रीशङ्करार्चितो भव्य इला इलावृत्तकृतालयः।
जम्बुद्वीपपतिः पूज्यो जगदीशो जगत्पतिः॥ ४४॥
विष्णुर्वर्षार्कापिर्मेरुशैलाधीशो गुहाशयः।
रम्यकेशो हिरण्येशः कुरुनाथो धरापतिः॥ ४५॥
हरिर्विर्षपती रामः किन्नराधीश्वरोऽपि च।
केतुमालविहारी च भद्राश्वकृतकेतनः॥ ४६॥
भारताधिपतिः कृष्णो नरनारायणो गुरुः।
बद्रीभक्तात्मदो भव्यो लोकानां हितकारकः॥ ४७॥

जगन्नाथो जगज्जीवः पावनः पुरुषोत्तमः ।
श्रीरङ्गनायकः पद्मनाभोऽनन्तो जनार्द्दनः ॥ ४८ ॥
दक्षिणाशाप्रियकरो धनुस्तीर्थो रघुप्रियः ।
धवः कान्तः पतिर्भर्ता स्वामीशो ठाकुराऽधिपः ॥ ४६ ॥
भीमापतिर्भीमसुतानाथः श्रीविठ्ठलेश्वरः ।
दीनोद्धारी कृपाकारी व्यङ्कटेशो हिमप्रियः ॥ ५० ॥
चतुर्भद्राप्रियस्तुङ्गः भद्रेशः कृष्णभूपतिः ।
शृगालहा शृङ्गधरो शृङ्गाधीशश्च मङ्गलः ॥ ५१ ॥
विष्णुर्विष्णुप्रियाचार्यो चम्पारण्यकृतोदयः ।
दुर्वादखण्डनो रुद्रः समुद्रः सर्वविज्जयी ॥ ५२ ॥
लोकाज्ञानहरो दक्षः शिखी मुण्डी च दण्डभृत् ।
शेषोऽशेषधरो विद्याधरः शोकहरः परः ॥ ५३ ॥
माधवो मापतिर्जीवो जीवनोऽमृतदोऽमरः ।
वैश्वानरो ब्रह्मवेत्ता सुधानाथो हरिप्रियः ॥ ५४ ॥
कुमारो मुक्तिदो मुक्तो जनेशो विश्ववन्दितः ।
द्वारावतिः शङ्खधरः कुशेशः श्रीत्रिविक्रमः ॥ ५५ ॥
रणत्यागी रणहरो ऋणहा सिद्धसेवितः ।
सोमनाथः प्रभाशेषः ज्वालामाली दिगम्बरः ॥ ५६ ॥
हिमालयः पशुपतिः केदारो दारवल्लभः ।
भूपतिर्भूधरः सिन्धुः सरिद्रूपो वनोऽवनिः ॥ ५७ ॥
जम्बूनारायणो मेरुशिखरानन्दवर्द्धनः ।
रत्नाकरो रत्नभोक्ता प्लक्षो प्लक्षाधिपो रविः ॥ ५८ ॥
जगदात्मा जगच्चक्षुस्तपनः सविता घृणिः ।
इक्षुः सिन्धुः शाल्मलीशश्चन्द्रः सुरपितृप्रियः ॥ ५६ ॥
विश्वानन्दकरः कालः सुरासम्मोहितोऽसुरः ।
कुशप्रियः कुशाध्यक्षो हुतभुक् घृतभोजनः ॥ ६० ॥

कौञ्चप्रियो भक्तमयो क्षीरसागरवल्लभः ।
शाकः शाकप्रियः प्राणो दधिभुक् देवसंयुतः ॥ ६१ ॥
पुष्करः पुष्करपतिर्विरिञ्चिर्मधुरो मधुः ।
मानसो मानसगतिः काञ्चनी मुकुरप्रियः ॥ ६२ ॥
लोकालोकमहास्थानो गोप्ता दिग्गजनायकः ।
स्वर्गो महर्ज्जनो दिव्यस्तपः सत्यं ध्रुवो व्रतम् ॥ ६३ ॥
वैकुण्ठो देवलोकश्च गोलोको ब्रह्मभू रसः ।
अतलो मयपुत्रेष्टः छलोऽथ वितलो हरः ॥ ६४ ॥
सुतलो भक्तवश्यश्च विक्रमी बलिपूजितः ।
महातलो महामायी काद्रवेयाशनासनः ॥ ६५ ॥
रसातलो दानवान्तकरणःसुरवल्लभः ।
त्रिलोकीधरणः शेषः नागेशो ज्ञानसागरः ॥ ६६ ॥
नानाकर्मगतिः पापगतिर्दुर्गतिदो यमः ।
अनन्तनरकच्छेदी पवित्रं वरसद्यशः ॥ ६७ ॥
कोट्यश्वमेधपापघ्नः कोटितीर्थातिपावनः ।
कोटिविश्वसमुद्धर्त्ता कोटिसाधनसाधनः ॥ ६८ ॥
निजाऽनुग्रहवल्लीलः ईश्वरोऽचिन्त्यकार्यकृत् ।
सत्प्रसादसमुद्धारः सतः सद्भासनाप्रदः ॥ ६९ ॥
असद्धीहरणः सर्वव्यापी सद्धर्मसद्गतिः ।
सद्धर्मपालकः सत्यमनुरूपी जनेश्वरः ॥ ७० ॥
वराहो यज्ञरूपश्च धरोद्धारी धरास्तुतः ।
हयशीर्षो हयग्रीवः सर्वविद्याप्रवर्त्तकः ॥ ७१ ॥
दत्तात्रेयो महायोगी नारदो देवपूजितः ।
कुमारः कपिलाचार्यः साङ्ख्यवित्सागरो धृतिः ॥ ७२ ॥
धर्मसूनुर्धर्मरूपः स्वधर्मपरिपालकः ।
यज्ञः सुरगणाधीशो मेरुदेवीसुतस्त्रिवित् ॥ ७३ ॥

योगीश ऋषभः स्थाणुर्योगचर्याप्रवर्त्तकः ।
पृथुः पृथुमनाः पृथ्वीपालको जगतः पिता ॥ ७४ ॥
मत्स्यः सत्यव्रतानन्दः कच्छपो मेरुभृत्समः ।
धन्वन्तरिः सुधाहस्तो जनरोगापवर्गदः ॥ ७५ ॥
मोहनी मोहनो मायी दनुजक्लेशदः पविः ।
नरसिंहो महासिंहो प्रल्हादोऽदितिजार्द्दनः ॥ ७६ ॥
उग्रो वीरो निजानन्दो भीषणार्त्तिहरः पविः ।
उरुक्रमः कर्मगत इन्द्रसेनाभयप्रदः ॥ ७७ ॥
रामः परशुभृद् दुष्टक्षत्रहारी द्विजार्त्तिहा ।
पाराशर्यो महाभागो ह्यनुकम्प्यनुभाववित् ॥ ७८ ॥
ज्ञानावतारो विज्ञाता वैष्णवोऽसुरमोहनः ।
श्रीरामचन्द्रो रघुजः साक्षाद्ब्रह्ममयो हरिः ॥ ७९ ॥
जगत्सन्तापहरणो ब्रह्मण्यः सत्यवत्सलः ।
सत्यसन्धः शरण्यश्च मर्यादापुरुषोत्तमः ॥ ८० ॥
कौसल्यानन्दनो देवदत्तो भरतवल्लभः ।
लक्ष्मणप्राणदः प्राणः शत्रुघ्नः शत्रुतापनः ॥ ८१ ॥
विश्वामित्रप्रियो दान्तः शान्तो दशरथात्मजः ।
सीतापतिः पुण्यकीर्त्तिर्हरकोदण्डभञ्जनः ॥ ८२ ॥
सत्यवाक् पितृसद्भक्तिर्मार्गनेता नरोत्तमः ।
निस्पृहो निर्ममो नित्यो निर्मोहश्च निरञ्जनः ॥ ८३ ॥
चित्राद्रिरमणः काकभिद आदिमुनिप्रियः ।
गुहस्वामी गुहानन्दी दण्डकारण्यपावनः ॥ ८४ ॥
दुष्टदानवहन्ता च स्वजनानन्दनक्रियः ।
शबरीशुद्धिदः सीतावियोगगतिनाट्यकृत् ॥ ८५ ॥
जटायुमुक्तिदो वायुसुतादिकपिवल्लभः ।
सेतुबन्धनकृन्नाम शक्तिसम्भृतभूधरः ॥ ८६ ॥

लङ्काधिपकुलध्वंसी विभीषणवरप्रदः।
अयोध्यानायकश्चैकक्रियारमणसद्व्रतः॥ ८७॥
यज्ञकृदृषिसम्मान्यो राजर्षिः सर्ववल्लभः।
शिवादिवन्दितपदो नटनाट्यो नराकृतिः॥ ८८॥
अयोध्यातारकस्तारः पुण्यश्लोकशिखामणिः।
वासुदेवो महादेवो बलभद्रोऽसुरौघहा॥ ८९॥
भूभारहरणो हारी त्रिलोकपरिपालकः।
वृन्दारकानुगो विज्ञोऽसुरमोहनतत्परः॥ ९०॥
बुद्धो बुद्धिप्रदोऽशुद्धमार्गकृद्वेदधर्महा।
अहिंसाव्याजसन्तप्तसर्वधर्मकृतागमः॥ ९१॥
कलिधर्माकुलजगत्पालको पालनक्षमः।
सन्धिधर्मधरो धुर्यो ह्यसन्मार्गविनाशकः॥ ९२॥
सद्युक्तिः सत्कृतिः साधुर्मुनिरूपकृतावनः।
उपधर्महरो विद्वान् धर्मदण्डधरो हरः॥ ९३॥
जगज्जेता जगन्नेता सर्वधर्मप्रवर्त्तकः।
तामसस्तामसजनो दुष्टबुद्धिप्रदो मदी॥ ९४॥
बहुधोपासनामार्गो विरक्तोऽवनिमण्डनः।
निःसाधनजनोद्धारी करुणावरुणालयः॥ ९५॥
वाक्पतिः श्रीधरो धीरो माधवश्च सनातनः।
विष्णुः कलिमलध्वंसी जाह्नवीजलसंश्रितः॥ ९६॥
महाकलिः कलिः क्लिष्टः कल्किः कलिनिवारणः।
म्लेच्छहाऽसिधरो लीलायुतस्तुरगवाहनः॥ ९७॥
ईशलीलाधरः सूर्यः श्रद्धालुः श्राद्धभुक् शुभः।
इक्ष्वाकुः पुरुजिच्चन्द्रोऽम्बरीषोऽप्यमितद्युतिः॥ ९८॥
निमिर्निमेषगः सत्यो यौवनाश्वो महाबली।
सगरः सागरो योगी जिताभागीरथोऽरिहा॥ ९९॥

खट्वाङ्गो मुचुकुन्दश्च रघुर्दशरथो द्युमान् ।
चन्द्रो द्विजेशो सुद्युम्न एलश्च नहुषो नृपः ॥ १०० ॥
ययातिश्च यदुत्राता कुरुश्च भरतो वृषः ।
कार्त्तवीर्यो महावीर्यो विश्वामित्रोऽपि शन्तनुः ॥ १०१ ॥
भीष्मः पाण्डुसुतः शैब्योऽलर्कोऽयोध्यापतिस्त्रिपात् ।
दिवोदासो रन्तिदेवो विष्णुदत्तो नरेश्वरः ॥ १०२ ॥
सद्धर्मरक्षणकृती निरोधगतिदोऽमृतः ।
जगतामाश्रयो नित्यो लोकातीतमहोदयः ॥ १०३ ॥
वेदैकवेद्यो वेदात्मा वेदानुग्रहकृत्प्रभुः ।
व्यापिवैकुण्ठनिलयो निजलीलारतिः प्रियः ॥ १०४ ॥
अवतारितभक्तांशसमुद्धारत्वराकृतिः ।
दिव्यैकनिलयो दिव्यो दिव्यक्रीडारसोऽरसः ॥ १०५ ॥
नन्दो नन्दयिताऽऽनन्दी यशोदानन्दमन्दिरः ।
व्रजेश्वरो व्रजाध्यक्षो व्रजवैभवकारकः ॥ १०६ ॥
असुरमायाह्वयोगमायाजनककार्यकृत् ।
पूर्णब्रह्मपरानन्दमात्रगात्रोऽविचिन्तनः ॥ १०७ ॥
परिपूर्णकलास्वामी सहस्रसुकलाधरः ।
भूभक्तप्रार्थितप्राप्यो भूभारहरणोदितः ॥ १०८ ॥
ब्रह्मेशेन्द्रादिदेवेड्यः पुरुषः पुरुषोत्तमः ।
असुरै रणकृत्त्राता मायेशो मोहकार्यकृत् ॥ १०९ ॥
वसुदेवः सत्वमूर्तिर्देवधानी निवासकृत् ।
ब्रह्मादिसंस्तुतो देवो वासुदेवश्चतुर्भुजः ॥ ११० ॥
व्याख्याताशेषमाहात्म्यः गोकुलानन्दकारकः ।
स्वव्यूहसंहरः सारः प्रयागचरितव्रतः ॥ १११ ॥
स्वकीयजनविज्ञातः स्वप्रियो जनरञ्जनः ।
महानन्दकरोऽमन्दगुणोदारो महोत्सवः ॥ ११२ ॥

गोगोपजनतानन्दः पूतनाप्राणहारकः ।
पूतनासुपयःपानप्रोद्धृतस्वीयबालकः ॥ ११३ ॥
मूलाविद्याहरः स्वीयचित्तरोधनपण्डितः ।
शकटासुरसंहारी स्वीयदोषनिवारकः ॥ ११४ ॥
पवनासुरभिद्भीष्मः मुरारिः सुतलार्द्दनः ।
गोस्वामी गोकुलपतिर्गोविन्दो नन्दलालितः ॥ ११५ ॥
गोपालो गोकुलाधीशो नवनीतप्रियः प्रभुः ।
दामोदरो भक्तवश्यो यमलार्ज्जुनमुक्तिदः ॥ ११६ ॥
अप्रमेयः प्रमेयात्मा बलदम्भविमर्द्दनः ।
कालियासुहरः क्रोधदण्डनो मण्डनः सताम् ॥ ११७ ॥
प्राणपालो दिव्यजन्मा लीलाताण्डवपण्डितः ।
वृन्दावनचरः कान्तो मल्लो नटसमाम्बरः ॥ ११८ ॥
बर्हापीडः पीतवासा सूर्यभूषणभूषणः ।
मुरलिनादमाधुर्यसमाहुतव्रजाङ्गनः ॥ ११६ ॥
योगमायाविरचितसर्वसेवाकृतार्थतः ।
लावण्यैकपरामूर्त्तिर्वृन्दारण्यपुरन्दरः ॥ १२० ॥
परमापीच्यगोपीड्यो वियोगहृतबन्धनः ।
सङ्गप्राप्तान्यमहिलामोहवाग् वदतां वरः ॥ १२१ ॥
स्वकीयारतिदः कामी कामशास्त्रविशारदः ।
पुरन्ध्रीदोषहरणः स्वात्ममायाप्रदर्शकः ॥ १२२ ॥
गोपिकागीतमहिमा स्वदोषपरिबोधकः ।
श्रीगोकुलपतिः साक्षी कोटिमन्मथमन्मथः ॥ १२३ ॥
भक्तोत्तमर्णः संकीर्णः सर्वानन्दकरो गुरुः ।
नृत्यलीलानुकरणस्त्रिभङ्गललिताकृतिः ॥ १२४ ॥
परमानन्दविस्तारविस्मायितसुरेश्वरः ।
सर्वसौभाग्यसुफलः कामदोषनिवारकः ॥ १२५ ॥

अलौकिकगतिः शङ्खासुरचूडामणिप्रदः ।
प्रेमात्मको रुक्ममूर्तिः पराश्रयनिवारकः ॥ १२६ ॥
केशिहा वृषहा चैत्र नारदेड्यो नृपेश्वरः ।
अक्रूरवल्लभो भूमिभारहा यादवेश्वरः ॥ १२७ ॥
कंसारिर्दुष्टदमनो व्रती गुरुवरादृतः ।
जरासन्धवधोद्दामी यवनान्तकरो रविः ॥ १२८ ॥
मुचुकुन्दप्रियः श्रीशो द्वारकासौभगोदयः ।
रुक्मिणीशः स्मरकरः प्रद्युम्नो रतिवल्लभः ॥ १२९ ॥
सत्यभामापतिर्जाम्बवतीशो लक्ष्मणापतिः ।
भद्रापतिर्मित्रविन्दापतिः शैब्यापतिर्मखी ॥ १३० ॥
कालिन्दिनीधवो धाता शतस्त्रीनायको युवा ।
षोडशस्त्रीसहस्रेशः सत्वसृष्टिपरायणः ॥ १३१ ॥
पाण्डवानन्दकरणः कौरवान्वयनाशनः ।
भूभारभूतराजन्यदैत्यसङ्घविनाशकः ॥ १३२ ॥
सुदामाभ्यर्थितः प्राप्तश्रुतदेवो निमिप्रियः ।
षड्गुणैश्वर्यसम्पन्नो निजभक्तानुरोधकृत् ॥ १३३ ॥
ज्ञानगम्यः साङ्ख्यगम्यो भक्तिवश्यः कृतागमः ।
स्वरूपानन्दरमणः स्वाश्रयो निरपाश्रयः ॥ १३४ ॥
योगीश्वरैर्वन्दिताङ्घ्रिर्देवानन्दकरः प्रभुः ।
शेषभूतसमस्तात्मा परानन्दमितो हरिः ॥ १३५ ॥
इति श्रीगोकुलेशस्य प्रोक्तं नामसहस्रकम् ।
पठनाद्भावविज्ञानां भजनानन्ददायकम् ॥ १३६ ॥
श्रीमदार्यप्रसादेन प्राप्य श्रीशमहामनुम् ।
समर्च्य संपठेद्भक्त्या निग्रहानुग्रहक्षमः ॥ १३७ ॥
भवेत् पूज्यश्च महतां विद्यानां पारदृश्वनः ।
सर्वापराधैर्मुच्येत परचर्यासु सङ्गतैः ॥ १३८ ॥

भक्तिबीजमवाप्नोति प्राप्नोति च दृढां श्रियम्।
ब्राह्मणो वेदवेदान्तसदाचारफलं लभेत् ॥ १३९ ॥
क्षत्रियो विजयी भक्तवत्सलो ब्राह्मणप्रियः।
वैश्यो वित्तपतिर्भव्यो दाता भोक्ता भवेदयम् ॥ १४० ॥
शूद्रः शुद्धो भवेदस्माद् ब्रह्मण्यो हरिवल्लभः।
भक्तो भक्तिं समाप्नोति कामी कामान् मनोगतान् ॥ १४१ ॥
रोगार्तो मुच्यते रोगाद् बद्धो मुच्येत बन्धनात्।
आपन्नश्चापदो मुच्येद् मुमुक्षुर्मुच्यते भयात् ॥ १४२ ॥
सर्वात्मनेह गदितः श्रीलीलापुरुषोत्तमः।
सर्वात्मभावलब्ध्यर्थं कामभावाप्तयेऽपि च ॥ १४३ ॥
नानेन सदृशं किञ्चित् श्रीपतेरतिवल्लभम्।
तस्मादवश्यमभ्यस्यं वैष्णवैः पूजने हरेः ॥ १४४ ॥
वृन्दावने वटप्रान्ते तीर्थस्थाने गुरोर्गृहे।
अभ्यस्य समवाप्नोति यजमानस्य बन्धुताम् ॥ १४५ ॥
परकृत्यासु घोरासु प्रेतादीनामुपद्रवे।
तीर्थामधुसरैः (?) पाठ्यं तत्तन्नाशयते क्षणात् ॥ १४६ ॥
पाषण्डानां प्रसङ्गेन ये ये दोषा भवन्ति वै।
ते सर्वे नाशमायान्ति सकृदावर्त्तनादपि ॥ १४७ ॥
एतेन मन्त्रितं भस्म अग्निहोत्रादिजं शुभम्।
विलिप्य घोरबाधासु तत्क्षणादुपसंहरेत् ॥ १४८ ॥
न वाञ्छन्ति च ये कामान् तेषां कामाः स्वसंस्थिताः।
अनुग्रहाद्भगवतः श्रीगोपालस्य ते प्रियाः ॥ १४९ ॥

इति श्रीशाण्डिल्यसंहितायां पञ्चमे भक्तिखण्डे द्वितीयभागे सहस्रनाम वर्णनं नाम पञ्चमोऽ( आदितो विंशतितमो )ध्यायः।

समाप्तः प्रथमांशः।

---

